श्रीः।

# कर्मविवेक

(अर्थात्)

# धर्मराजका लेखा।



## कुरुक्षेत्रान्तर्गत कमल ग्रामस्थ विद्वन्मान्य श्रीगीताराम निर्मित।

अस्मिन्ग्रंथेसमस्तपापानांप्रायश्चित्तंनिरूपितम्।

श्लोकः

गृहीत्वेदं कुतोवापि स्त्रीपुंसां शतकर्णगम्।
नकरोति द्विजो यावत्तावत्स्यादृणवान्मम॥ १॥



यहग्रन्थ

श्रीकृष्णदासात्मज

गङ्गाविष्णु और खेमराज

इन्होंने

स्वकीय "श्रीवेंकटेश्वर" छापखानेमें छापकर

प्रसिद्धकिया

(बम्बई.)

संवत् १९४७

५

॥ श्रीः ॥

# अथ धर्मराजका लेखा ।

श्रीमते रामानुजायनमः॥करलेखा यमराजका रकम चूकतीसा
थ लेकर चालो यमपुरी तहां न आवै हाथ॥ १॥तहा न आवै हाथ
दूसरा कर्म देतनहि यारी॥ते जगादाधर्मका तुर्त रकमलेसारी२॥
पापपुण्यदोऊरकर्कारि धर्मराजव्यापारी पूगेपापीपापदेखकर तुर्त
नरकमाडारी॥ ३॥ घटी पलककी क्षमानहि है करोलाखअलचा
री विष्णुभक्तके कुलकाहोवै दिनाएकदेठारी॥ ४॥ परलोकीजन
बहुतहैं प्रगट गुप्तअघभारी वांचत पाप करत जबलेखा होगीब
हुत खवारी॥ ५ ॥यावेलाकों बहुपछितइहो जबपूगोयमके द्वा
री गीतारामकहैकरजोरै ईहांकरोनिर्द्धारी॥ ६ ॥ अजितुह्मकरो
निवेडा नाहरहै विखेडा वारवार मैं करूंवीनती वचनमानल्योमे
रा॥ ७॥ संसारी पापकिये संचितघणे पुण्यलेशनहिएक को
ण पुण्य करनाशिएदुःसहपापअनेक ॥ १ ॥ दुःसह पापअनेक
कहो हमकिसविधकरिये साधनसर्वस्वहीन जीव नरकनसैं डरि
ए भर्मत भर्मत जगतमा वीते जन्मअनेक हमसंसारीयुगनके
किसविधि कराविवेक लावनी जैसैंजगमैकाढादिवाला शरण
बडेकि जायबैठे मांगणवाले मांग मांग फिर निरास होयकरघ
रबैठे॥ २ ॥ तैसेतुह्मबिनपुण्यलेशके पापनसहित शरणजावो
होय अकिंचन अनन्य चिंतक परमार्थका फलपावो॥ ४ ॥
सोरठा जगत्कचहडी च्यार भ्रमते कुंजर सौचवत् मिलैन सा
गी न्याव बडीकचहडी विनगए॥ ५ ॥ अर्थ राजद्वार शास्त्र

यके दिखायवि दियाहै इतिसर्वजनसुखबोधार्थंग्रंथतात्पर्यज्ञाना
र्थंच भाषापत्रंनिबद्धं ॥ननु ईश्वरः सर्वभूतानां हृद्देशेर्जुनतिष्ठति
भ्रामयन्सर्वभूतानीत्यत्र तिष्ठति भ्रामयन्पदाभ्यां ज्ञायते या
वत्तिष्ठति तावत्संसारे स्वर्गनरकादिषु भ्रामयति तस्मात्हृदये
स्थितिरेवेश्वरस्यकार्या ईश्वरस्तु तत्तत्पापैरशुद्धेहृदिस्थातुंनेच्छ
ति तत्तत्पापप्रायश्चित्तैरपि नाल्पकालसाध्याशुद्धिरस्तीति त
स्मात्तच्छरणमतिरेव पराहृदयबुद्धिप्रतिपादका अभिहिता गी
तायां अत्रतुसंचितपुण्यैरेव हृदयशुद्धिं व्यवस्य तदल्पत्वे शर
णागतिरपि प्रतिपाद्यते अंतःप्रविष्टःशास्ता जनानामित्युक्तेः
स्थितिरेव परमपुरुषार्थप्रतिपादिका साचात्रैव कर्तुंशक्यते न
लोकांतरे तदुक्तं विष्णुपुराणे उत्तरंयत्समुद्रस्य हिमाद्रेश्चैवद
क्षिणं वर्षंतद्भारतंनाम भारतीयत्रसंततिः॥ १ ॥ नवयोजनसा
हस्रो विस्तारोस्यमहामुने॥कर्मभूमिरियंस्वर्गमपवर्गंचगच्छतां॥
॥ २ ॥ इतः स्वर्गश्च मोक्षश्च मध्यश्चांतस्य गम्यते नखल्वन्य
त्रमर्त्यानां कर्मभूमौविधीयते ॥ ३ ॥ अत्रापिभारतंश्रेष्ठं जंबू
द्वीपेमहामुने ॥ यतोहिकर्मभूरेषा अतोन्याभोगभूमयः॥ ४॥ अ
त्रजन्मसहस्राणां सहस्रैरपिसत्तमः॥कदाचिल्लभ्यतेजंतुर्मानुष्यं
पुण्यसंचयैः॥ ५ ॥ इत्युक्ते रत्रकृतकर्मणां नैष्कर्म्यं व्यत्यासंच
संकल्पमात्रेणकर्तुंशक्यते लोकांतरेतु यथोक्तमेवफलं पराधीन
त्वादृर्थाद्भोगभूमयस्थाइतिबोध्यं स्वर्गिणोप्येतमिच्छंति लोकंनि
रयिणस्तथा साधकंज्ञानभक्तिभ्यामुभयंतदसाधकं ॥ ६॥ युगां
तरवदत्रफलंतु कलौ कल्मषमनस्कतयानभवतिसाधनेष्वर्थवाद
इतितु नशक्यं तदुक्तं भारते॥स्नानमात्रेणगंगायाःपापंब्रह्मवधोद्भ
वंदुराधर्षंकथंयातिचिंतयेद्वावदेदपि॥तस्याहंप्रदहेत्पापंब्रह्मकोटि
वधोद्भवं॥अतिवादमिमंमत्वा कुंभीपाकेषुजायते॥आकल्पंनरकंभु

क्का ततोजायेतगर्द्दभः॥इतिभविष्य कौर्म्ये भारतेषु॥ ॥श्रीमते रामचंद्रायनमः सीतारामंमनोरामं स्मृत्वास्मृत्वावदाम्यहं॥ विवेकंकर्मणांयत्तत् धर्मशास्त्रानुसारतः॥१॥आरभ्यजन्मतो यावत्कृतं कर्मशुभाशुभं॥तत्सर्वंपरिसंख्याय श्रेयोधिक्यंयथाभवेत्॥ २ ॥ कर्त्तव्यंतत्प्रयत्नेन पश्चातापोन्यथाभवेत्॥मरणानंतरंदुःख मत्य सह्यंप्रपद्यते ॥ ३ ॥ संसारेजीवजातंयद्वशेतिष्ठतिकर्मणां॥ विना चातींद्रियज्ञानं दुर्लभंतद्विवेचनं ॥ ४ ॥ तद्विवेकेसमुद्युक्तो निर्ल्लज्जोमूढधीरलं वाच्यतांयामिविदुषा मन्येषांमुपहास्यतां ॥ ५ ॥ मूढामूढतरामूढतमायेभारतेजनाः तेषामग्र्योभविष्यामि ह्यति मूढतमोयतः॥ ६ ॥ यद्वा कर्मविवेकंते कृत्वात्रतत्रसंस्थिताः मुनयोधर्मसदसि ज्ञात्वेदंनिर्भरोस्म्यहं॥ ७ ॥ किंचश्रीराम पदयोर्मया स्वात्मासमर्पितःतेनैवप्रेरितोवच्मि पुण्यपाप विवेचनं ॥८॥ श्रीमद्भागवते पंचमस्कंधे नरकान्श्रुत्वा करुणार्द्रचित्तो राजा पप्रच्छ अधुनेहमहाभाग यथैवनरकान्नरः नानोग्रयातनान्नेयात्तन्मे व्याख्यातुमर्हसि॥ ९ ॥ श्रीशुकउवाच नचैदिहैवापचितिंयथांहसः कृतस्यकुर्यान्मन उक्तिपाणिभिःध्रुवंसवैप्रेत्यनरकानुपैति येकीर्तिता मे भवितस्तिग्मयातना ॥१०॥ तस्मात्पुरैवास्विहपाप निष्कृतौ यतेत मृत्योरविपद्यतात्मना दोषस्यदृष्ट्वागुरुलाघवंयथा भिषक्चिकित्सेतरुजांनिदानवित् एतत्विद्वान् पुरामृत्योरभवाययतेतसः अप्रमत्तइमंज्ञात्वामर्त्यमप्यर्थसिद्धिदं ॥१॥ नृदेहमाद्यंसुलभंसुदुर्लभमित्यादि अन्यथानृगराजवत् भुनक्तिः शरठादियोनिभिरिति॥ ११ ॥ स्कंदपुराणे ज्ञाताज्ञातेषुपापेषुक्षुद्रेषुचमहत्सु च षट्सुषट्सुचमासेषुप्रायश्चित्तमुपश्चरेत्॥ १२ ॥ निष्कल्मषोनरोवैश्यसकृतांतंनपश्यति याज्ञवल्क्यः प्रायश्चित्तमकुर्वाणाः पापेषुनिरतानराः अपश्चातापिनः कष्टान्नरकान्यांति

दारुणान् ॥ १३ ॥ विहितस्यानुष्ठान्निंदितस्यचसेवनात् अनि
ग्रहाच्चेंद्रियाणां नरः पतनमिच्छति ॥ १४॥ तस्मात्तेनेहकर्तव्यं
प्रायश्चित्तंविशुद्धिये एवमस्यांतरात्माच लोकश्चैवप्रसीदति ॥ १५
अंगिराः यत्पुण्यमुद्धृतेविप्रे म्रियमाणेजलादिषु तत्पुण्यंतारिते
पापा त्प्रायश्चित्तैस्तुमानवैः॥ १६॥अथमुख्यत्वेन तत्प्रत्याम्नायत्वे
नच प्रायश्चित्तमाह वाराहे प्राजापत्यंमयाप्रोक्तं प्रायश्चित्तादिक
र्मसु तद्लक्षणं मनुः त्र्यहंप्रातस्त्र्यहंसायं त्र्यहमद्यादयाचितं त्र्यहं
परंचनाश्नीया त्प्राजापत्यंचरंद्विजः ॥ १७ ॥ पराशरः सायंद्वावि
शतिग्रासा प्रातः षड्विंशतिः स्मृताः अयाचिते चतुर्विंशाःपरंचा
नशनंस्मृतं ॥ १८ ॥ तत्र प्राजापत्यंमुख्यं तदशक्तौ प्रत्याम्नाय
श्चोक्ताः मार्कंडेयः प्राजापत्यक्रियाशक्तौ धेनुंदद्याद्विचक्षणः धे
नोरभावेदातव्यं तुल्यंमूल्यंनसंशयः ॥ १९ ॥ कृच्छ्रंदेव्ययुक्तंचैव
प्राणायामशतद्वयं विप्राद्वादशवैभोज्या युक्तारेष्टिस्तथैवच ॥२०
उपोष्यश्रद्धयायुक्तो तिलपात्राणिधर्मतः द्वादशब्रह्मवादिभ्यः प्रा
जापत्येनतत्समं ॥ २१ ॥ स्वयंवात्सेस्थितोमूर्ध्ना तृणभारानुपो
षितः दद्याद्गोमंडलेकृच्छ्रे द्वादशैवनसंशयः ॥ २२ ॥ प्राणायामश
तंकृत्वा द्वात्रिंशोतरमात्रिषु अहोरात्रोषितस्तिष्ठे त्प्राङ्मुखःकृच्छ्र
उच्यते ॥ २३ ॥ नमस्कारसहस्राणि द्वादशैवदृढव्रतः गोविप्रपितृ
देवेषुकुर्यात्कृच्छ्रत्रयंभवेत् ॥२४॥ प्रत्येकमिदं वसिष्ठः अथचेत्वर
तेंकर्तुं दिवसंमारुताशनः रात्रौस्थित्वाजपव्युष्टःप्राजापत्येनतत्स
मं ॥ २५ ॥ गोमूत्रेणसमायुक्तं पावकंचोपयोजयेत् कृच्छ्रमेकाह्निकं
प्रोक्तं दृष्टमंगिरसास्वयं ॥२६॥ निश्वासीनोदिवातिष्ठेत् त्रिरात्रंमा
रुताशनः प्राजापत्यंविजानीयात्कुष्मांडैर्जुहुयाद्घृतं २७कृच्छ्रोयु
तंचगायत्र्या उदवासस्तथैवच धेनुप्रदानंविप्रायसममेतच्चतुष्टयं
॥२८॥एतच्चतुष्टयंसमं प्राजापत्येनेत्यर्थः विप्राद्वादशवैभोज्या पा

वकेष्टि स्तथैवच अन्यावापावनीकाचि त्समान्याद्धर्मनीषिणाः ॥
॥२९॥ गवांशृंगोदकस्नानं महानद्याश्वसंगमे समुद्रस्पर्शनेतुल्यं
यद्देवादेवहेडनं ॥ ३० ॥ चातुर्मास्ये माघे वैशाखेवा तीर्थेचतु
र्वारं वारुणस्नानं ॥२३॥ अयुतंसाष्टांगप्राणायामः ॥२४ ॥ वेदसं
हितापारायणं॥२५॥शतद्वयं प्राणायामाः॥२६॥योजनंतीर्थयात्रा
२७।अयुतंप्रदक्षिणाज्ञेया यास्याद्विंशतिहस्तका॥२८॥कर्षप्रमाणं
सुवर्णं निर्धनेपात्रे द्विजेऽर्पणं ॥२९ ॥ पावकेष्टीः॥ ३० ॥ पावमा
नीवेति ॥ ३१॥ घृताक्त पंचायुतवर्तीनां देवालये तीर्थेवाज्वालनं
॥ ३२ ॥ तैलाक्तानांलक्षं ॥ ३३ ॥ भुक्तानांद्विलक्षं ॥३४॥ तिला
ज्येन गायत्र्याव्याहृतिभिर्वा सहस्रंहोमः ॥३५॥ यावत्केषशोषणं
विरम्य तीर्थे द्वादशस्नानानि ॥ ३६ ॥ षडुपवासाःफलादिभिः॥
॥ ३७ ॥ रंगवल्या पंचविंशति सहस्रे प्राजापत्यं ॥ ३८ ॥ शतप
त्र जाति मालिका मालती यूथिका पुष्पैःपंचविंशति सहस्रै रर्चनं
॥ ३९ ॥ चंपकस्यायुतपूजनेच ॥ ४० ॥ तुलस्याः सार्द्धद्विसह
स्रैर्दलैःपत्रैर्वा विष्ण्वर्चनं ॥ ४१ ॥ तुलसीकाष्ठसमिद्रूपेर्गायत्र
्या व्याहृतिभिर्वा अष्टोत्तरशतघृताक्त तिलहोमेचैवं॥ ४२॥ तुल
सीकाष्ठमालयाऽष्टोत्तरशतं जपोगायत्र्याविष्णुमंत्रस्यविशेषश्च॥
॥४३॥ अन्याहृततुलसीदलैःपंचसहस्रैरर्चनेप्राजापत्यं ॥ ४४ ॥
क्रीतेनायुतसंख्याकार्चनेनवा ॥ ४५ ॥ एकभुक्त नक्ता याचितो
पवासा क्रमेणत्रिरावृत्ताः॥४६ ॥ एकोपवासपूर्वक द्वादशतिलपा
त्रदानं ॥ ४७॥ गायत्र्या द्वादशाधिक सहस्रसंख्याक समिद् घृत
हविर्धान्याना मन्यतमस्य होमोवा ॥ ४८ ॥ मूर्खषष्टि विप्रभोज
नं ॥ ४९ ॥ संहितापाठतो द्विगुणपदपाठः॥ ५० ॥ त्रिगुणंक्रम
पाठः॥ ५१ ॥ षट्गुणंजटापाठः॥ ५२ ॥ महाभारतपाठे षट्पंचा
शत्॥ ५६ ॥ कृच्छ्रा ॥ ५३ ॥ श्रवणेतदर्द्धं ॥ ५४ ॥ अर्थतोद

शगुणः ॥ ५६ ॥ भागवत् पाठे पंचविंशति कृच्छ्राः ॥ ५७॥ व्या
स्यातु सप्ताहमध्येशतगुणं ॥ २५०० ॥ सार्द्धद्विसहस्रकृच्छ्राः
॥ ५८ ॥ श्रोतॄणां नियमपूर्वके ऽर्द्धं पुरुषसुक्तस्यैक चत्वारिंश दुत्त
रशतत्रय पाठेकृच्छ्रः अथज्ञानेचतुर्गुणं ॥ ५९ ॥ गीतायादशसं
ख्याकपाठेकृच्छ्रः ॥ ६० ॥ अर्थज्ञानेचत्वारः कृच्छ्राः ६१ विष्णोः
सहस्रनाम्नांषष्टी संख्याकपाठे कृच्छ्रः ॥ ६२ ॥ अर्थज्ञाने पंचदश
पाठैः ॥ ६३ ॥ नामावली द्वादशपाठेकृच्छ्रः ॥ ६४ ॥ पुराणांतरपा
ठेऽर्द्धं ॥ ६५ ॥ अर्थतः पाठे चतुर्गुणं ॥ ६६ ॥ वाचनेद्विगुणं ॥ ६७
संहितापाठेकृच्छ्रं ॥ ६८ ॥ तत्समगणितपाठेकृच्छ्रं ॥ ६९ ॥ व्या
करणपाठेपि ॥ ७० ॥ अर्थतोध्ययनेचतुर्गुणं ॥ ७१ ॥ विद्यादाने
सहस्रगुणं ॥ ७२ ॥ अंगानांयोगैचतुर्गुणं ॥ ७३ ॥ कुटंबिनोब्रा
ह्मणस्य गृहव्ययपर्याप्तान्नप्रदभूमिदाने ॥ १८० ॥ कृच्छ्राः
॥ ७४ ॥ हरणेदशगुणंपापं ॥ १८०० ॥ पंचराग्यागमपाठे
गायत्रीसमं ॥ ७५ ॥ उपनिषत्पाठे गायत्रीसमं ॥ ७६ ॥
अर्थज्ञाने चतुर्गुणं ॥ ७७ ॥ अथव्रतांतरं चांद्रायणेत्रयः
कृच्छ्राः त्रिंशत्साहस्त्रिकोजपः पराके कृच्छ्रद्वयं तथाचांद्रायणप
राकाभ्यां निष्कृतिंयोनतत्कुर्यात् सकुर्यादात्मशुध्यर्थं प्राजापत्य
चतुष्टयं॥२॥धेनुद्वयंतप्तकृच्छ्रे पराकेतुसुवर्णस्याद्धेमशृंगीतथैवदवे
पराकेसुवर्णधेनुद्वयस्य मूल्यंसमं तिलहोमायुतंचैव पराकद्वयमे
वच गायत्र्यालक्षमेकंतु समान्याहबृहस्पतिः गोमूत्रपाचितस्य
पावकस्य मासंपाने द्वादशसंख्याक प्राजापत्यानि त्रिंशन्नक्तै र्द
शोपवासा स्तत्रकृच्छ्रचतुष्टयं ततृकृच्छ्रद्वयेन चंद्रायणंतुल्यं चां
द्रायणेसार्द्ध सप्तधेनवः पराकः पंचधेनुसमः पंचप्राजापत्यतुल्य
त्वात् तत्पकृच्छ्रंपादोनधेनुचतुष्टपदानसमं शंखः द्व्यहंप्रात द्व्यहं
सायं द्व्यहम ध्यादयाचितं द्व्यहंपरंचनाश्नीया त्पादोनः कृच्छ्रउ

च्यते॥ १॥ आपस्तंबः सायंप्रात स्तथैवैकं दिनद्वय मयाचितं दिनद्वयंचनाश्नीया त्कृच्छ्रार्द्धंचैवमुच्यते ॥ २॥ पादमाह याज्ञवल्क्यः एकभुक्तेनायाचितेनोपवासेन त्रिरात्रं अथनक्तादि दिनं विलंघ्य रात्रौसार्द्धयामाभ्यंतर मितभोजने नक्तव्रतं तदशक्तौ गुंजाद्वयपरिमितरूप्यमाषदानं तदभावे तन्मूल्यं दिवारात्रमभोजनमुपवासःतदशक्तौ गुंजाषट्कपरिमितरूप्यं मासत्रयदानं तदभावेतन्मूल्यं एकविप्रभोजनंसहस्त्रगायत्रीजपोवा द्वादशप्राणायामोवा ॥ ॥ अथशक्तिज्ञानार्थं दरिद्रधनिकादिलक्षणं वाराहे वर्षमध्ये तुल्याऽयव्ययो नृणी चेत् मध्यमः ॥ १॥ धनंवर्द्धयित्वा वार्षिकंग्रासमर्जयेत्सधन्यः ॥ २॥ द्विवार्षिकमर्जयेत्सधन्य तरः ॥ ३॥ त्रिवार्षिकमर्जयेत्सधन्यतमः ४ अथ धनं विनैव वार्षिक ग्रासार्जकोवीरः मध्यमसमः १ द्विवार्षिकार्जको वीरतरः २ त्रिवार्षिकार्जकोवीरतमः ३ एतेपि मध्यमादित्रय पर्यायाः धनस्य पावतोवृध्या निर्वाहो वार्षिकोभवेत् तद्धि मूलधनंज्ञेय मन्नद्वन्यमितीरीतं १ यस्यमूलधना दन्यद्विधते द्विगुणंधनं धन्य धन्यतरौ तत्रमध्यमौ परिकीर्तितौ २ मध्यमौ मध्यम धन्यतम शब्दयो रंतरालगतौ पूर्वोक्तौ वेदितव्यौ यस्तुधन्यतमः प्रोक्तः सभवेद्धनिकोनरः वीरोपि मध्यमः प्रोक्तः धनिका द्विगुणोधनी ३ भर्ता शतकुटुंबानां वीरोपिस्या न्महाधनी सहस्त्रकुटुंबभर्त्ता नृपः सामंतसमः तद्दशगुणोराजा तद्दशगुणो महाराजा तद्दशगुणोराजाधिराजः तद्दशगुणो चक्रवर्ती तथा मध्यमादर्द्धोदरिद्रः तदर्द्धो महादरिद्रः तदर्द्धो अकिंचनः अथैतेषां स्पष्टतया व्याख्यानं यथाशक्तिश्च विशदीक्रीयते॥ १॥ अकिंचनतो वर्षभोज्ये सार्द्ध मासपर्याप्त भोज्यं अर्जयति॥ २॥ महादरिद्रो वर्षमध्ये मासत्रयपर्याप्तभोज्यं अर्जयति॥ ३ ॥ दरिद्रो वर्षमध्ये षण्मासपार्याप्तंभो

ज्यं अर्जयति अन्यन्नृणां ७ मध्यमः ४ धन्यः ५ः धन्यतर ६ धन्यतमः ७ एतेव्याख्याताः ८ धनीवर्षमध्ये षड्वर्षपर्यंतं भोज्यमर्जयति ९ महाधनी शतकुटुंबभर्ता १० नृपसामंतः सहस्त्र १००० कुटुंब भर्त्ता ११ राजा अयुतकुटुंबभर्ता १०००० ।१२ महाराजा लक्षकुटुंबभर्ता प्रत्यहं ॥ १३ ॥ राजाधिराजः प्रयुतकुटुंबभर्ताप्रत्यहं ॥ १४ ॥ चक्रवर्ती कोटिकुटुंबभर्ता प्रत्यहं ॥ अथैतेषां चतुर्दशानां यथा शक्ति गोदानं परहस्तेन धर्मानुष्ठाने दक्षिणादानं चाभिधीयते धनिक इति धन्यतमपर्यायः अकिंचनस्य तुल्यं गोमूल्यं दशगुंजापरिमाणं सुवर्णं १ महादरिद्रस्य सार्द्धमासद्वयं विंशतिगुंजापरिमाणं सुवर्णं २ दरिद्रस्य माषपंचकं हिरण्यं मूल्यं वा गोदानं ३ मध्यमस्य कर्षमूल्या ४ धन्यस्य द्वादशमाषमिता ५ धन्यतरस्य चतुर्दश ६ धन्यतमस्य षोडशमाषहिरण्यमिता धेनुः ७ धनी संज्ञकस्याष्टादशमाषकं हेम ८ महाधनिनो विंशतिमाषमूल्या ९ नृपसामंतस्य कर्षत्रयसुवर्णमूल्या धेनुः १० राज्ञो गोदानं चतुःकर्षहिरण्यमूल्यसमं ११ महाराज्ञस्तु पंचकर्षहिरण्यमूलसमं गोदानं १२ राजाधिराजसंज्ञकस्य षष्टिमाषकं षट्कर्षमितं गोदानं १३ चक्रवर्तिनः सप्ततिमाषकं सप्तकर्षमिति हिरण्यमूल्यसमं गोदानं सर्वत्राष्टगुंजोमाषः इतियथाशक्ति प्रमाणं हीने २ वित्तशाठ्यंभवति प्रायश्चित्तेष्विदमेव मुख्यं शोधकं अथप्रतिग्रहे ब्राह्मणस्य अकिंचनो द्वात्रिंशांशंदानस्यदद्यात् तथाजपहोमादिषु लब्धाच्च ॥ १ ॥ महादरिद्रः षोडशांशं दद्यात् प्रतिग्रहजपादिलब्धाच्च २ दरिद्रोष्टमांशं दद्यात्प्रतिग्रहात् जपहोमादिलब्धाद्वा ॥ ३ ॥ मध्यमस्तुर्यांशं दद्यात् प्रतिग्रहाज्जपहोमादिलब्धाद्वा ४ धन्यस्त्र्यंशं दद्यात पूर्वलब्धात् ५ धन्यतरः सार्द्धद्वयंशंदद्यात्

६ धन्यतमो अर्द्धं ७ धनिकोर्द्धं षट्पादं दद्यात् ८ महाधनी पा
दोनं दानप्रतिग्रहादिषु लब्ध धनात् ९ अग्रेप्येवंकल्प्यं १०
११ १२ १३ १४ एवंदत्तेशेषं वित्तं शुद्धं देवपित्र्यादिषु यथा
र्हं विनियोज्यंच तथा पूर्वयुगादिवद्धेन मूल्यार्हंच भवति अन्य
थानेति निष्कर्षः अतएव द्रव्यशुद्धिः कलौनास्तीति संगच्छते
परहस्तेन धर्मानुष्ठाने दक्षिणा मध्यमो द्विजहस्तेन सहस्रसंख्या
कसाष्टांगे द्वादशयवमितं हिरण्यं दद्यात् सहस्रव्याहृतिहोमे
धनिको यवमात्रं सुवर्णंदद्यात् लक्षहोमेशतंयवाः महाधनो द्वि
गुणंदद्यात् दरिद्रोऽर्द्धं नवार्द्धं अतिदरिद्रो यवचतुर्थांशं अकिंचनो
अष्टमांशं यवस्येति सर्वत्र योग्यदक्षिणादाने त्रिभागं फलं दा
तुर्भवति चतुर्थांशं कर्तुर्भवति इतिज्ञेयं ॥ अथजपस्य दक्षिणा
गायत्र्या सहस्रजपे यवमात्रं सुवर्णं दक्षिणा महाधनो द्विगुणं
दद्यात् दरिद्रोयवार्धं अतिदरिद्रो यवचतुर्थांशं अकिंचनो
यवाष्टमांशं दक्षिणा सर्वत्रयोग्यदक्षिणादानेदातुः त्रिभागं
फलंभवति तुर्यांशं कर्तुर्भवति इत्येवं सर्वत्रोह्यं षट्त्रिंशन्मते अ
थ भोजनदक्षिणा मध्यमोदाता चेत् द्विगुणं भोजानादुत्तमा तद
र्द्धांमध्यमा तदर्द्धाकनिष्ठा धनिको द्विगुणं दद्यात् दरिद्रोभोजनमू
ल्यादर्द्धंदद्यात् धेनुः पंचभिदाढ्यानां मध्यानां त्रिपुराणिका कार्षा
पणैकमूल्याहि दरिद्राणां प्रकीर्तिता ॥ १ ॥ पंचभिरिति कार्षाप
णैरितिशेषः आढ्यो महाधनः कार्षापणः षोडशपणः पुराणं का
र्षापणं कात्यायनः द्वात्रिंशत्पणिका गावो वत्सः पौराणको भवे
त् तेन वत्समूल्यं पुराणं एकं गोमूल्यं कार्षापणद्वयमितिमिलि
त्वा धेनुमूल्यं पुराणत्रयं सवत्सगोरेव धेनुत्वात् इत्युक्तं अन्यत्र
च गवामभावे निष्कंस्यात्तदर्द्धं पादमेवचेति निष्कंतु निष्कं सु
वर्णाश्चत्वार इत्युक्ते सुवर्णचतुष्टयसमतोलितं रूप्यंभवति सर्व

मेतद्युगांतरविषयं द्रव्यशुद्धिः कलौ नास्ति संस्कारः स्मार्तएव
चेति मनुः असत्प्रतिगृहीताच तथैवायाज्ययाजकः नक्षत्रै
र्जीवितेयश्च सोंधकारंप्रपद्यते ॥ २ ॥ अधर्मोपार्जितैर्द्रव्यैः यःकु
रोत्यौर्ध्वदैहिकं नसतस्य फलंप्रेतो भुंक्तेऽर्थस्यदुरागमात् यत्कः
कर्मणागार्हितेनैव यद्द्विजैः समुपार्जितं द्रव्यत्यागेनशुध्यंति धर्म
स्यान्वेषणेनवा ॥ ३ ॥ अप्सुप्राप्स्यतु तद्द्रव्यमन्यायेन यदाग
तं प्रतिग्रहानुशिष्टाय देयं वा ब्रह्मचारिणे ॥ ४ ॥ इत्यादिवचो
भिः द्रव्यशुद्धिः कुत्रापिनास्ति शुद्धद्रव्याणां युगांतरोद्भवानां
कार्षापणत्रयेण पयस्विनीज्ञेया नैवास्मिन्युगे इतिनिर्णयः वाराहे
कलिधर्माणां विशेषतो निरूपण ब्रह्माएव यथाशक्ति गोदानादि
निरूपणंकृतं तदेवग्राह्यं युगांतरोक्त कार्षापणत्रयमितं पयस्वि
नी धेनुमूल्यं तथैक कार्षापणं सामान्यधेनु मूल्यंच गृह्यते चेद
व्यवस्थास्यात्तत्तुल्यश्रमाभावात् अथतीर्थस्नानेकृच्छ्राः स्मृत्य
र्थसारे शालिग्राम शंभलग्रामे संनिहत्यादि सप्तगोदावरी भीमे
श्वर हरीहरक्षेत्र सेतुरामेश्वर पद्मनाभ श्रीरंग पुरुषोत्तम कुरुक्षेत्र
नैमिष बदर्याश्रम पुण्यारण्य केदार श्रीशैल महालय रुद्रकोटि
पुष्कर कुब्जाम्र कब्रमाप कोकामुख पंचनद गोकर्ण मथुरा ऽयो
ध्या गया गंगा कांचीत्यादिषु योजनागतस्य कृच्छ्रत्रयं नर्मदा ता
पी पयोष्णी कृष्णा वेणी कृतमाला पयस्विनी तुंगभद्रा भीमरथी
त्यादिषु योजनादागतस्य पद्भ्यां कृच्छ्रं वंजरासंगमे कुब्जिकासं
गमे योजनादागतस्य कृच्छ्रद्वयं नर्मदा दृषद्वती शतद्रुविपाशा
वितस्ति इरावती मरुद्वृधा ऽसिक्नी मधुमती पयस्विनीषु योजना
गतस्य कृच्छ्रद्वयं यमुनासरस्वत्योः योजने सार्द्धकृच्छ्रं प्रयागे गं
गाद्वारे गंगासागरे काश्यांच योजने षट्कृच्छ्राः चंद्रभागा वेत्र
वती सरयू गोमती देविका कौशिकी मंदाकिनी पुनःपुना पूर्णा

पुण्या बाहूदा वारुणी गंडक्यादि देवनदीषु त्रियोजनागतस्य कृ
च्छ्रचतुष्टयं आसांसंगमे परस्परं द्विगुणं अन्यासु समुद्रगासु न
दीषु योजने ऽर्द्धकृच्छ्रं महानदेषु पादकृच्छ्रं योजनागतस्य शोण
नदेसार्द्धकृच्छ्रं शुक्तीर्थे कृच्छ्रचतुष्टयं गोदावर्यांयोजने सार्द्धकृ
च्छ्रं त्रिभिः सारस्वतंतीर्थं सप्ताहेनतुयामुनं सद्यः पुनातिगांगेयं द
र्शनादेवनर्मदा इतिस्कांदोक्तेः सर्वत्रसंगमे द्विगुणं अनुक्तस्थले
योजनेकृच्छ्रः नदेषुनद्यर्द्धं महानदेषु महानद्यर्द्धं सोणभद्रे गंगार्द्धं
ककुद्मतीसंगमे सार्द्धकृच्छ्रं कन्यास्थेगुरौ कृष्णावेणी गंगार्द्धा सा
र्द्धकृच्छ्रफलं तुंगभद्रायां तुलास्थे कर्कस्थेच रवौ सार्धकृच्छ्रं गं
गार्द्धाइत्यर्थः मल्लिकार्जुनसमीपे पातालगंगायां षडब्दसमं पंच
दशकृच्छ्रोब्दः ततः पूर्वे षष्टिकृच्छ्रसमं लिंगालये द्विगुणं समुद्र
संगमेचैवं कावेर्यां सार्द्धकृच्छ्रं सह्याद्रिपादोद्भवानद्यो योजनम
विच्छिन्नं प्रवाहरूपाश्च दैर्घ्यानुसारेण योजनागतस्यैक द्वि त्रि
कृच्छ्रफलदाः अल्पनद्यः कृच्छ्रफलदाः नद्योद्विकृच्छ्रफलदाः म
हानद्यः कृच्छ्रत्रयफलदाः अथैषांलक्षणं एकयोजनगादिषड्यो
जनगाः स्रवंतिकुल्याः ततोद्वादशयोजनगाः अल्पनद्यः ततश्चतु
र्विंशति योजनगानद्यः तदधिकयोजनगा महानद्यःसमुद्रगाश्च
पुराणादिप्रोक्ता महानदीऽव्यपदिष्टाश्च महानद्यः तत्रमहानदी
स्नानं उपवासयुक्तंचेत् योजनादर्वागपि कृच्छ्रसमं समुद्रस्नानं स
दादर्शेकार्यं योजनात्कृच्छ्रफलं सरोनदीसंगमे देवतापार्श्वेच स
र्वदा समुद्रस्नानंकार्यं द्विकृच्छ्रफलदं प्रसिद्धदेवतासमीपे स्नात्वा
देवतादर्शने त्रिगुणं विंध्यदेशीयानां रामेश्वरे जान्हव्यात्रिगुणं
रामेश्वरदेशीयानां जान्हव्याषड्गुणं गंगादेशीयानां सेतुरामेश्वरे
षड्गुणं स्कंददर्शने विंशतिकृच्छ्रसमं इतितीर्थस्नाने कृच्छ्रविचा
रःपैठीनसिः अर्द्धंतीर्थफलंतस्य यः प्रसंगेनगच्छति षोडशांशंस

लभते यः परार्थेन गच्छति॥१परार्थेन उद्देश्यतां तीर्थप्रसंगेनेत्य
र्थः परार्थेन वेतनंगृहीत्वा प्रभासखंडे परान्नेनेतिपाठः प्रभासखंडे
यश्चान्यंकारयेच्छक्त्या तीर्थयात्रांतरेश्वरः स्वकीयद्रव्ययाना
भ्यां तस्य पुण्यंचतुर्गुणं ॥ २ ॥ गोयाने गोवधस्तुल्योहययानेतु
निष्फलं नरयानेतदर्द्धस्यापद्भ्यांतच्चचतुर्गुणं पुनरपितत्रैव ती
र्थानुगमनं पद्भ्या तपः परमिहोच्यते तदेवकृत्वापानेन स्नानमा
त्रफलंलभेत् ॥ ४॥ द्विर्भोजनं तृतीयांशं हरेतीर्थफलस्यच पा
नमर्द्धचतुर्थांशं छत्रोपानहमेवच ॥ ५ ॥ तथान्यत्र पानमर्द्धफलं
हंति तदर्द्धं क्षत्रपादुके वाणिज्यंत्रीन् तथाभागान् सर्वंहंतिप्रति
ग्रहः॥६॥ गोभिलः गोभिर्युक्तेनयानेन तीर्थयात्रांकरोतियः ॥सया
तिनरकंघोरं यावद्रोरोमसंख्यया ॥ ७॥ एतत्सकलमार्गयानेज्ञेयं
किंचिद्दूरं यानगमनेतु योजनादि गणनया फलमूह्यं गोभिलः अ
समर्थस्तु यानेन तीर्थयात्रांसमाचरन् तदुक्तं फलमाप्नोति स्वश
क्त्याधर्ममाचरन् कूर्मपुराणे तीर्थयात्रास्वशक्तानां यानंदोषकरंन
हि योजनप्रमाणं तिर्यक्यवो दराण्यष्ट मूर्ध्नावा व्रीहयस्त्रयःप्रमाण
मंगुलस्योक्तं वितस्तिर्द्वादशांगुलः ॥१॥ हस्तोवितस्तिद्वितयं द
डोहस्तचतुष्टयं तत्सहस्रद्वयं क्रोशो योजनंतच्चतुष्टयं इतियोज
नादिप्रमाणं॥ २ ॥ काशीखंडे नृणांपापकृतां तीर्थांत्पापप्रशम
नंभवेत् देवलः प्रायश्चित्तीव्रजेत्तीर्थं पत्नीविरहितोपिवा ॥ ३ ॥ अ
नुसंगेन तीर्थंप्राप्य स्नानमेवफलं सपत्नीकस्यपूर्णंफलं एकस्या
र्द्धं विरक्तस्यपूर्णं वसिष्ठः नतीर्थे प्रतिगृह्णियात्प्राणैः कंठगतै
रपि अपिकामातुरोजंतुरेकांरक्षतिमातरं ॥ ४ ॥ तीर्थेप्रतिग्रहोय
स्तु तीर्थविक्रयएवसः विक्रीतायांतुगंगायांविक्रीतः स्याज्जनार्द
नः जनार्दनेतुविक्रीतेविक्रीतंभुवनत्रयं यस्तुलौल्यात्स्थितः क्षे
त्रे प्रतिग्रहरुचिर्भवेत् ६ नैवतस्यपरोलोको नायंलोकोदुरात्म

नः महादानानियेविप्रा गृह्णंतिज्ञानदुर्बलाः ॥ ७ ॥ वृक्षास्तेद्विज
रूपेण जायंतेब्रह्मराक्षसाः नवेद बलमाश्रित्य प्रतिग्रहरुचिर्भ
वेत् ॥ ८ ॥ भारते चांद्रायणसहस्रंतु यश्चरेत्कायशोधनं पिबेद्य
श्चापिगंगांभः समौस्यातांनवासमौ ॥ ९॥ भवंतिनिर्विषाःसर्पा य
थाताक्षस्यदर्शनात् गंगायाः दर्शनादेव सर्वपापैः प्रमुच्यते १०
पापानांपापहंत्रीत्वं स्वर्गमोक्षैकहेतुना स्वभावएषगंगायाः शै
त्यंशीतरुचेर्यथा ॥ ११ ॥ नगंगासदृशंतीर्थं नदेवः केशवात्परः
ब्राह्मणेभ्यः परंनास्तीत्येवमाहपितामहः ॥ १२ ॥ सर्वंकृतयुगे
तीर्थं त्रेतायांपुष्करंतथा द्वापारेतुकुरुक्षेत्रं कलौगंगेवकेवलं १३
येनाकार्यशतं कृत्वा कृतंगंगाभिषेचनं ॥ १४ ॥ तत्सर्वंतस्यगंगा
या दहत्यग्निरिवेंधनं ॥ १४ ॥ पराशरः उपवासमहोरात्रं ब्र
ह्मकूर्चंविनिर्दिशेत् पंचगव्येचवर्णेभ्यो विहितंदिव्यचक्षुषा १५
पवित्रंत्रिषुलोकेषु देवताभिरनुष्ठितं मध्यमेनपलाशस्य पद्मपत्रे
णवापिबेत् ॥ १ ॥ यत्वगस्थिगतंपापं देहेतिष्ठतिमानवे ब्र
ह्मकूर्चंदहेत्सर्वं शुष्कमग्निरिवेंधनं ॥ १७॥ प्रकारः पूर्वमुक्तः॥अथ
भागकल्पना समर्थस्य सर्वपरहस्तेन विधिवद्दक्षिणा दानेतुल्य
फले तुर्यांशहानिः तत्तुर्यांशं कर्तुर्गच्छति असमर्थस्य षोडशां
शहानिः अनधिकारिणां स्त्रीशूद्रादीनांतु यथोक्तं दक्षिणादाने
तुल्यंफलं जपहोमादिषु स्त्रीपत्याज्ञया सौभाग्यवतीगृह्णीयात्
मातासुतार्थंगृह्णीयात्तत्रार्द्धंफलं पादं पादं मातुः कर्त्तुश्चभवति
कर्त्तुः कारयितुश्चे त्युक्तत्वात् द्विजस्यकर्त्तुः पादंमध्यस्थस्य पि
तुर्मातुर्वा पादंभवति अवशिष्टमर्द्धंबालस्येतिभावः सर्वत्रभक्त्या
कर्त्तुः फलंपूर्णम् हेलयानिष्फलं यजमानस्यतु पूर्णं यथोक्तदक्षि
णादानेभवति विप्रस्यदोषभाक्त्वं ऋणीचभवति आभिचारिक
होमेपि आचार्यस्यार्द्धं ऋत्विजश्चतुर्थांशं सकामस्यार्द्धंफलंहोतुः

केवलं दक्षिणाकामस्य विप्रस्य तुर्यांशं आचार्यस्यत्वर्द्धं यजमा
नस्यपूर्णं पुरापकर्तुर्विप्रस्य निर्वाहकर्तुरर्द्धंफलं वेदपाठादेर्भवति
यजमानस्याभिगम्यदानेपूर्णं आहूयदानेऽर्द्धं अयाचितेतुर्यांश
भाग्भवति विशेषतोयाचने षोडशांशंभवति अध्येतुरपि ब्रह्म
मीमांसोदरर्द्धंफलंवसिष्ठः सर्ववेदपवित्राणि वक्ष्याम्यहमतःपरं ये
षांजपश्चहोमश्चहूयंतेनात्रसंशयः।१।अघमर्षणं वेदक्तं शुद्धवन्य
स्तरतमाकूष्मांडा पावमान्योपि विराजं मृत्युलांगलं।२।भद्राव्या
हतयोदुर्गा महादोषविनाशनी ऋतंचसत्यंचेत्यघमर्षणं त्रिरात्रं
जलेपठेत्सर्वमस्मात्पापात्प्रमुच्यते हारीतः हत्वालोकानपिसमां
त्रिःपठेदघमर्षणं यथाश्वमेधावभृथस्तथायमंत्रमब्रवीत् रुद्रैकाद
शभिर्जप्त्वा तदन्हैवविशुध्यति घृततिलात्समिधोवाजुहुयात् अ
प्सुवानियतोजप्त्वा तदन्हैवविशुध्यति अथशारीरपवित्रं यदन्हा
रात्र्यावा पद्भ्यां पापमकार्षं विष्णुर्मातस्मादेनसो विद्वान्मुंचत्वं
हसः यदन्हा रात्र्यावा उपस्थे पापमकार्षं प्रजापति र्मा तस्मा
देनसो स्मान्मुंचत्वंहसः ॥ २ ॥ यदन्हा रात्र्यावा पायुना पा
पमकार्षं मित्रो मातस्मादेनसो विश्वस्मान्मुंचत्वंहसः ॥ ३ ॥
यदन्हा रात्र्यावा पाणिभ्यां पापमकार्षमिंद्रोमा तस्मादेनसोमुं
चत्वंहसः ॥ ४ ॥ यदन्हा रात्र्यावा वाचापापमकार्षमग्निर्मा
तस्मादेनसो विश्वान्मुंचत्वंहसः ॥ ५ ॥ यदन्हा रात्र्यावा जि
ह्वया पापमकार्षमापोवा तस्मादेनसो विश्वान्मुंचत्वंहसः ॥६॥
यदन्हा रात्र्यावा प्राणेन पापमकार्षं पृथिवी मातस्मा देनसो
विश्वान्मुंचत्वंहसः॥ ७ ॥ यदन्हा रात्र्यावा चक्षुषापापमकार्षं
सूर्योमातस्मादेनसो विश्वान्मुंचत्वंहसः ॥ ८ ॥ यदन्हा रात्र्या
वा श्रोत्राभ्यां पापमकार्षं पर्ज्यन्योवा तस्मादेनसो विश्वान्मुंचत्व
ंहसः ॥ ९ ॥ यदन्हा रात्र्या वा त्वचा पापमकार्षं वायुर्मात

मृयात्॥२॥ अस्यार्थः सर्पव्याघ्रादिना हन्यमानस्य ब्राह्मणस्य प
रिरक्षणाद्ब्रह्महत्यातः मुक्तिमाप्नोति॥प्रक्रांतव्रतकार्याभावात्तदेवब्र
ह्मण्यं अथवा गवांद्वादशकस्य वधपरित्राणाच्चशुध्यति तदपिक्रां
तद्वादशाब्दिकस्यैव चतुर्विंशतिमते कृत्वार्वाक् ब्रह्महत्यायाः ष
डब्दंकृच्छ्रमाचरेत् प्रत्याम्नायेगवांदेयःसाशीतिर्धनिनाशतं॥३॥
तथाष्टादश लक्षाणां गायत्रींवाजपेद्बुधः गायत्र्यास्तु जपेत्कोटिं
ब्रह्महत्यांव्यपोहति ॥ ४ ॥ अंगिराः गतेतुद्वादशेवर्षे ब्रह्महापूय
तेनरः षड्भिर्वर्षैः कृच्छ्रचारीब्रह्महत्यांव्यपोहति ॥ ५॥ मासिमा
सि पराकेण त्रिभिर्वर्षैर्व्यपोहति अर्धमासेन भुंजानो द्विवर्षाभ्यां
विमुच्यते ॥ ६ ॥ संवत्सरेण मासाशी पूयतेनात्रसंशयः ॥ ७ ॥ म
नुः हविष्यभुग्वानुसरेत्प्रतियोजाः सरस्वतीतः सुमंतुनोक्तमथवा
प्रायश्चित्तंनिबोधमे ॥ ८ ॥ जातिमात्र ब्राह्मणवधे ऽज्ञानपूर्वके
ब्राह्मणस्य प्रभासात् विंदुसरः पुष्कर प्रयाग कुरुक्षेत्र मार्गेण
प्लक्षंप्रतिगच्छेत् यत्रोत्पत्तिः सरस्वत्या भविष्यत्पुराणे हत्वातुक्ष
त्रियोविप्रं गुणाढ्यांमपिकामतः प्रायश्चितंचरेद्धीरो विधिवदात्म
शुद्धये॥ ९॥ लक्ष्यंशस्त्रभृतांवास्यात् विदुषामिच्छयात्मनः॥प्रास्ये
दात्मानमग्नौवा समिद्धे त्रिरवाक्शिराः ॥ १० ॥ यजेतवाश्वमेधेन
क्षत्रियोविप्रघातकः प्रायश्चित्तत्रयंह्येतत्क्षत्रियस्यप्रकीर्तितं ॥
॥ ११ ॥ विप्रस्यतुकामतो द्विगुणं विहितं यदकामानां कामात्तु
द्विगुणंभवत् इतिदेवलस्मरणात् ॥ १२ ॥ विदुषामुपदेशकर्तॄणां
तदभावे आत्मेच्छया मनुः सर्वस्वंवेदविदुषे ब्राह्मणायोपपादयेत्
धनंवा जीवनोपायं गृहंवा सपरिच्छदं ॥ १३ ॥ एतच्चाज्ञानतो
जातिमात्र ब्राह्मणवधे पराशरः विंध्यादुत्तरतोयस्य निवासः प
रिकीर्तितः पराशरमतंतस्य सेतुबंधस्य दर्शनं ॥ १४ ॥ हत्वाग
र्भमविज्ञातमेतदेवव्रतंचरेत् राजन्यवैश्यौचेजानावात्रेयीमेवच

स्त्रियं ॥ १५ ॥ उक्त्वाचैवानृतं साक्ष्ये प्रतिरुध्य गुरुन्तथा अप
हृत्यचनिक्षेपं कृत्वाचस्त्रीसुहृद्वधं ॥ १६ ॥ इयंविशुद्धिरुदिता प्रमा
प्याकामतोद्विजं कामतो ब्राह्मणवधे निष्कृतिर्नविधीयते ॥ १७
प्रकृतत्वात् ब्राह्मणगर्भविषयं अविज्ञातं स्त्रीपुंनपुंसकत्वेनाविज्ञा
तं ॥ आत्रेयीच ब्राह्मणी रजस्वला ऋतुस्नाता स्त्री १६ षोडश दिन
साक्ष्यहिरण्यभूम्यादियुक्तसाक्ष्ये गुरोश्च मिथ्याभिशापे निक्षे-
पंच हिरण्यमृते ब्राह्मणस्य क्षत्रियस्य हिरण्यमपि मित्रंचाब्रा
ह्मणमेव अनात्रेयीहननंक्षत्रियवत् शूद्रांहत्वा संवत्सरं॥जमदग्निः
यद्वा वाराणसीं गच्छेत्सेतुं श्रीपर्वतादिवा अन्यान्यपिचती
र्थानि गायत्रींवाजपेत्तथा ॥ १८ ॥ अत्रिः ब्रह्महाब्दत्रयं
विप्रोगायत्रीमभ्यसेत्तदा प्राणायामशतंकुर्यात्प्रत्यहंनियतःशु
चिः ॥ १९ ॥ एतदेवव्रतंस्तेनः पादन्यूनंसमाचरेत् गत्वै
तदेवकुर्वीत गुरुतल्पमकामतः ॥ २० ॥ ब्रह्महत्या समेष्वे
तत्प्रयोजककर्तृषुवा अल्पत्वात् ॥ अथ सुरापानप्रायश्चित्तं जातू
कर्ण्यः अनुपेतस्तुयोबालो मद्यंमोहात्पिबेद्यदि तस्यकृच्छ्रत्रयंकु
र्यान्माताभ्रातातथापिता ॥ २१ ॥ सुरापाने षट्कृच्छ्राः कल्प्या
मद्यपानात्सुरापानस्य द्वैगुण्यदर्शनात् विष्णुः अशीतिर्यस्यव
र्षाणि बालोवाप्यूनषोडशः प्रायश्चित्तार्द्धमर्हंति स्त्रियोव्याधितएव
वचेति ॥ २२ ॥ अंगिराः ऊनैकादशवर्षस्य पंचवर्षात्परस्यच
चरेद्गुरुः सुहृद्वापि प्रायश्चित्तंविशुद्धये ॥ २३ ॥ बृहद्विष्णुः माध्वी
क मैक्षवं मैरं तालखार्जूरपानसं मधूत्थंचैवमार्द्वीकं मैरेयंनारिके
लजं ॥ २४ ॥ अमेध्यानिदशैतानि मद्यानिब्राह्मणस्यच अग
स्त्यः पुनरेकादशविधमाह पानसंप्राज्ञमाधूकं खार्जूरंतालमैक्षवं
मधूत्थंमैरमादिष्टं मैरेयंनारिकेलजं ॥ २५ ॥ समानानिविजा
नीयान्मद्यान्येकादशैवतु द्वादशंतुसुरामद्यं सर्वेषामधमंस्मृतं ॥

॥२६॥ विप्रस्याज्ञानतः सुरागंधघ्राणेकार्यं ज्ञानतः सांतपनं कृ
च्छ्रं क्षत्रियवैश्ययोः पादपादहानिः गौडी माध्वी गौणी पैष्टी मु
ख्या तस्याएव प्रायश्चितंमुख्यं तयोरभ्यासेतुल्यं मत्याच तयोर
भ्यासेतुल्यं मत्याच तयोरकामतः सकृत्पाने कृच्छ्रातिकृच्छ्रौचां
द्रंच पुनःसंस्कारो घृतप्राशनंच तयोर्मत्यासकृत्पाने छर्दनेच वा
र्षिकं कणभक्षणं कामतो द्विस्त्रिरभ्यासे छर्दनेच षडब्दं एकादश
विधमद्यपाने विप्रस्याज्ञानतः सकृत्पाने तप्तकृच्छ्रं पुनःसंस्कार
श्च ज्ञानतःसकृत्पाने कृच्छ्रातिकृच्छ्रं समुद्रगायां नद्यां चांद्रंवा कृ
त्वा घृतप्राशनं मुखमात्रप्रवेशे षट्रात्रं पद्मोदुंबरबिल्वपलाश
कुशोदकपानं गौडी माध्व्योर्द्विगुणं कामतः सर्वत्रद्विगुणं अभ्या
से आवृत्तिः सर्वत्र अनन्यौषधसाध्यव्याध्युपशमनार्थे सुरापाने
ज्ञानकृते त्रैमासिकं अब्दपादं चांद्रायणंवा कृत्वा पुनरुपनयनं
एवंवृद्धातुरस्त्रीणामर्द्धं उभयत्रापि बालविषये पित्रादिभिः कार्यः
एवंमद्यपानेतु तप्तकृच्छ्रं पुनःसंस्कारः ज्ञानकृते मद्यपाने तप्त
कृच्छ्रद्वयं पुनः संस्कारः सुरापांतु तप्तकृच्छ्र पराक चांद्राणि सुरां
बुघृतगोमूत्र पयसामग्नि संनिभं सुरापोन्यतमंपीत्वा मरणाच्छु
द्धिमाप्नुयात् ।यमः सुरांपीत्वाद्विजोमोहादग्निवर्णां सुरांपिबेत् ते
नास्यकाये निर्दग्धे मुच्यतेकिल्बिषात्ततः ॥ २८ ॥ गोमूत्रमग्नि
वर्णंवा पिबेदुदकमेववा पयोघृतंसुवर्णंवा गोशकृद्रसमेववा ॥
२९ ॥ असकृज्ज्ञानतः पीत्वा वारुणींपततिद्विजः मरणंपूर्वनिर्दि
ष्टं प्रायश्चितंविधीयते॥३०॥अंगिराः बृहस्पतिसवेनेष्ट्व सुरापो
ब्राह्मणःपुनःसमत्वंब्राह्मणोगच्छेदित्येषावैदिकी श्रुतिः ३१भूमि
प्रदानंयः कुर्यात्सुरांपीत्वा द्विजोत्तमः पुनर्नचपिबेज्जातु संस्कृतः
सविशुध्यति ॥३२॥संस्कृतउपनीतः सकृत्कृतेएतत्॥बृहस्पतिः
गौडींपैष्टीं तथामाध्वीं पीत्वाविप्रः समाचरेत्॥३३॥तप्तकृच्छ्रंपरा

कंचचांद्रायणमनुक्रमात्॥३४॥व्रतांतरासमर्थस्यैतत् किंच अज्ञा नाद्वारुणींपीत्वा रेतोविड्मूत्रमेववा पुनः संस्कारमर्हंति त्रयोवर्णा द्विजातयः॥ ३५॥ एतदपिप्रायश्चित्तपूर्वकमेव सर्वेषामेवपापानां संकरेसमुपस्थिते शतंसहस्रशोभ्यस्ता गायत्रीपावनीमहत्३६॥ अथसुरापानसमानि वेदनिंदा व्यसनासक्तयाधीतवेदविस्मरणं १ कूटसाक्ष्यं अविप्रमित्रवधः मत्याभ्यासेन पलांड्वादि गर्हित भक्षणं रजस्वलामुखचुंबनं वाङ्मनःकर्मणा मतार्जवरूपं जैह्म्यं जात्योत्कर्षार्थं राजकुलादौ चतुर्वेदीति अनृतभाषणं सर्वमिदं पूर्वोक्तार्द्धप्रायश्चित्तं अथसुवर्णस्तेयप्रायश्चित्तं सुवर्णस्तेयी मासंगायत्र्याष्टशतमाज्याहुतीर्जुहुयात् प्रत्यहं त्रिरात्रमुपवासी तप्तकृच्छ्रेणच पूतोभवति अश्वमेधावभृथेनवा षट्त्रिंशन्मते सुवर्णकृष्णलंलेह्यकमपहृत्यनराधमः कुर्याच्चांद्रायणंकृच्छ्रं योयस्यापहृतेचतत् ॥ ३७॥ एवंभावमात्रहरणे गोमूत्रयावकाहारी मासत्रयंचरेत् सुवर्णादल्पहरणे वत्सरःपरिकीर्तितः ॥ ३८॥ क्षत्रिय वैश्य स्वामिके तूपपातकं मनसापहारं संकल्प्योपरतस्य द्वादशरात्रं लघुविष्णुः स्तेये ब्रह्मस्वभूतेतु सुवर्णहरणेकृते तस्मात्तेनैवदातव्यं तस्माच्चैकादशाधिकं॥ ३९॥ ऋणसंशुद्धिभावाय ततश्चांद्रायणत्रयम् संवत्सरेण कर्त्तव्यं निपुणांशुद्धिमिच्छता ४० अभावेकांचनस्य स्याद्व्रतमेतच्चतुर्गुणं चरेद्यतात्मानिःसंगः पूर्वं वर्षचतुष्टयं॥ ४१॥ समाप्तेकांचनंगाश्च रजतंचापिशक्तितः देयमन्नंद्विजाग्र्येभ्यः शुभंपापापनुत्तये ॥ ४२ ॥ चांद्रायणत्रयंचैव यवमध्यपिपीलिका मध्यपतिचांद्रायणरूपं अत्रिः षडब्दंवाचरेत्कृच्छ्रं यजेद्वाक्रतुनाद्विजः तीर्थानिवाचरेद्विद्वान् ततस्तेयाद्विमुच्यते ॥ ४३॥ सुमंतुः सुवर्णस्तेयी द्वादशरात्रं वायुभक्ष्यो भवति स्त्रीबालवृद्धानामर्द्धम् चतुर्विंशतिमते हत्वादशगुणंदत्वा

प्रायश्चित्तंसमाचरेत् रूप्यंहत्वा द्विजोमोहाच्चरेच्चांद्रायणव्रतं ॥ ४४ ॥ हत्वातुदशकादूर्ध्वं मासात्तद्विगुणंभवेत् आसहस्रात्तु द्विगुणं ऊर्ध्वंहेमविधिः स्मृतः ॥ ४५ ॥ अथगुरुतल्पप्रायश्चित्तं प्राजापत्यंचरेत्कृच्छ्रं समंवागुरुतल्पगः चांद्रायणंवात्रीन्मासा नभ्यसेद्वेदसंहितां ॥ ४६ ॥ ज्ञानतोमरणांतिकं सवर्णेषु वीर्यपा तांतं कृत्वेति गुरुतल्पानुवृत्तौ प्रायश्चित्तेहारीतः एवमेव पितृव्य स्त्रीगमे कन्यासगोत्रजा स्वसृजा गमने चांद्रायणं वसिष्ठः आचा र्यपुत्रशिष्यभार्यासुचैवंक्रतुः रेतःसेकः स्वयोन्यासु कुमारीष्वंत्य जासुच सख्युः पुत्रस्यचस्त्रीषु गोषु शिष्यांगनासुच सखिभार्या सुतस्त्रीषु गमनाद्गुरुतल्पगः ॥ ४७ ॥ अथतत्संसर्गिणां प्रायश्चि त्तमाह देवलः पतितेनसहोषित्वा जानन्संवत्सरंनरः मिश्रित स्तेनसोऽब्दांते स्वयंचपतितोभवेत् ॥ ४८ ॥ संसर्गहेतूनाह बृह स्पतिः एकशय्यासनंपंक्तिर्भांडपक्वान्नमिश्रणं यजनाध्ययनेया नं तथाचसहभोजनं ॥ ४९ ॥ नवधासंकरः प्रोक्तो नकर्तव्योऽध मैः सह पराशरः संसर्गमाचरन्विप्रो पतितादिष्वकामतः ॥ ५० ॥ पंचाहंवादशाहंवा द्वादशाहमथापिवा अब्दार्द्धमब्दमेकंवा भवेदू र्ध्वंतुतत्समः ॥ ५१ ॥ त्रिरात्रंप्रथमेपक्षे द्वितीयेकृच्छ्रमाचरेत् च रेत्सांतपनंकृच्छ्रे तृतीयेपक्षएवतु चतुर्थे दशरात्रंस्यात्पराकः पंचमेमतः षष्ठंचांद्रायणंकुर्यात् सप्तमेचैववैद्वयं ॥ ५३ ॥ अष्टमे तुतथापक्षे षण्मासान् कृच्छ्रमाचरेत् ॥ ५४ ॥ मतिपूर्वंस्मृत्यं तरे पंचाहेतु चरेत्कृच्छ्रं दशाहे तप्तकृच्छ्रकं पराकस्त्वर्द्धमासे स्यान्मासेचांद्रायणं चरेत् ॥ ५५ ॥ मासत्रयेतुकुर्वीत कृच्छ्रं चांद्रायणंतथा संसर्गेत्वाब्दिकेकुर्यादब्दंचांद्रायणंनरः॥५६॥ सं सर्गीसंसर्गेनवाब्दंतृतीयपक्षतृतीयसंसर्गे चतुर्थस्यषडब्दं पंचम स्य त्रैवार्षिकं मुख्यसंसार्गिणो द्वितीयस्यैव पातित्यंश्रौतस्मार्तो

दिकर्महानिः तृतीयादेस्तुनपातित्यं किंतुप्रायश्चित्तमात्रमेव इति मिताक्षरा प्रांचस्तु तृतीये व्रतार्द्धंचतुर्थेन किंचिदित्याहुः एवम तिपातकादिषुकामतः पादोनं आकामतोऽर्द्धं उपपातकादिषु तु ल्यं त्रैमासिकादिषु त्रैमासिकं शंखः कन्यांसमुद्वहेदेषां सोपवासा मकिंचनां नोदत्तां स्वयमुपनतां परिणयेत्॥ ५७॥ हारीतः पति तस्यतु कुमारीं विवस्त्रामहोरात्रमुपोषितां प्रातः शुक्लेनवाससा हतेनाच्छाद्य नाहमेतेषांनममैते इतित्रिरुच्चै रभिधानां तीर्थसंकट हेतोरुद्वहेत् इतिसंकीर्णप्रायश्चित्तं॥अथ गोवधप्रायश्चित्तं जाबा लः प्राजापत्यं चरेन्मासं गोहत्याचेदकामतः गोहितो गोनुगामी च गोप्रदानेनशुध्यति॥ ५८ ॥ एतत्साहचर्यात्पंचगव्यं पिबेन्मा समित्याद्यपि याज्ञवल्क्यवाक्यानि अकामवधविषयाणि सर्वत्र गोस्वामिनो द्रव्येणपरितुष्टिःकार्या शातातपः पंचगव्येन गोघा ती मासेनैकेनशुध्यति गोमतींचजपेद्विद्यां गवांगोष्ठेचसंविशेत् ॥ ५९ ॥ वृद्धमनुः गोगर्भहननेपादमुत्पन्नमात्रेतु द्वौपादौगात्रसं मिते पादोनंकृच्छ्रमाचष्टे हत्वागर्भंसचेतनं॥ ६० ॥ वृद्धप्रचेताः एकवर्षे गविहते कृच्छ्रपादोविधीयते अबुद्धिपूर्वंपुंसः स्याद्द्विपाद स्तुद्विहायने ॥ ६१ ॥ त्रिहायने त्रिपादः स्यात्प्राजापत्यमतः परं बहुभिरेकाहताचे त्पादंपादं कामतस्तु संपूर्णं द्विगुणंसर्वत्र गोभिलः मुष्कमोषकरोविप्रो गोवधव्रतमाचरेत् प्रयोजकस्तु कु र्वीत व्रतस्यार्द्धं विशुद्धये॥ ६३॥ मुष्कमोषकरो बीजकोशनाश करः गोघ्नस्त्रीन् कृच्छ्रान् प्राजापत्यान् कुर्यात् गोमतींच जपे द्विद्यां हंताचेन्निर्गुणोभवेत् ॥ ६४ ॥ पराशरः रोधनेतुचरेत्पा दं बंधनेचार्धमेवच योजनेपादहीनं स्यात्प्राजापत्यं निपातने ६५ ॥ शीतानलमृताचैव उद्बंधनमृतापिवा शून्यागाराद्युपेक्षा यां प्राजापत्यंविनिर्दिशेत् ॥ ६६ ॥ अपालनात्प्रणश्येत्तु गौश्च

रंतीकथंचन जलपल्वलमग्नावा मेघविद्युद्धतापिवा ॥ ६७॥ श्व
श्रेवापतिताकस्माच्छ्वापदेनापिभक्षिता प्राजापत्यंचरेत्कृच्छ्रं
गोस्वामीव्रतमुत्तमं ॥६८॥ बृहस्पतिः अनागतस्यचानेता आ
गतस्यच रक्षिता रात्रावपिपदाचान्यस्तदास्वामीनदोषभाक् ॥
६९ गौतमः विक्रयैर्गोविनिमयैर्दत्वागोमांसखादके चांद्रायणव्र
तंकुर्या द्वधेसाक्षाद्विधीभवेत् ॥ ७० ॥ विनियमः स्वीयांदत्वा प
रकीयाग्रहणं गोभिलः हलैर्वाशकटैर्वापि वाहयेद्योवृषंस्वयं प्राजा
पत्यद्वयं कुर्याद्विगुण्यंयोषितंगवामिति चाकामतः ॥ ७१ ॥
कामतो द्विगुणं तथा वृषभंवात्समुत्सृष्टं कपिलां वापिकामतः यो
जयित्वाहलेकुर्याद्व्रतंचांद्रायणद्वयं ॥ ७२ ॥ समुत्सृष्टं श्राद्धो
त्सृष्टं कपिलादोहनेपि अंगिराः अंगुष्ठमात्रं स्थौल्येन बाहुमात्रप्र
माणतः आर्द्रश्चैवपलाशश्चदंडइत्यभिधीयते ॥ ७३ ॥ अस्मादू
र्ध्वप्रमाणेन यदिगांविनिपातयेत् द्विगुणंतु चरेत्तत्र प्रायश्चित्तमि
तिस्थितिः ॥ ७४ ॥ संवर्त्तः एकाचेद्बहुभिः काश्चिद्दैवाद्व्यापादि
ताभवेत्पादंपादंतु हत्यायाः चरेयुस्ते पृथक्पृथक् ॥ ७५॥ मति
पूर्वंतुसंपूर्णं चरेयुस्तेपृथक्पृथक् च्यवनः गोघ्नः सौम्यत्रयंकुर्यात्
कृच्छ्रंवानवमासिकं गोमूत्रपावकाशीवा त्रिभिर्मासैविशुद्ध्यति
॥ ७६ ॥ सौम्यकृच्छ्रं पूर्वोक्तं संवर्तः गर्भिणींकपिलां दोग्ध्रीं हो
मधेनुंच सुव्रतां रोधदिनाघातयित्वा द्विगुणं व्रतमाचरेत् ॥ ७७॥
मनुःउपपातकसंयुक्तो गोघ्नो मासं यवान्पिबेत् गोमतीविद्या
जपश्च विश्वामित्रः कृच्छ्रांस्तुचतुरः कुर्याद्गोवधेबुद्धिपूर्वके अमत्या
तुद्वयंकार्यं तदर्द्धंवृद्धबालयोः ॥ ७८ ॥ स्त्रीशूद्रयोरेवमेव तद्वधेच
नसंशयः चांद्रायणंवासर्वेषु निमित्तेषुविधीयते ॥ ७९ ॥ अथ
क्षत्रियवैश्यशूद्रादिवधे संवर्तः प्रमाप्यक्षत्रियंत्वेवं त्रिभिः कृच्छ्रै
र्विशुद्ध्यति कुर्याच्चैवानुपूर्वेण त्रीन्कृच्छ्रात् सुसमाहितः ॥ ८०॥

वैश्यहत्यांतुसंप्राप्य कथंचित्काममोहितः कृच्छ्रातिकृच्छ्रौकुर्वीत कामतोवैश्यघातकः ॥ ८१ ॥ कुर्याच्छूद्रवधं प्राप्य तप्तकृच्छ्रंस माहितः। आनुपूर्व्यंतु कृच्छ्रातिकृच्छ्रतप्तकृच्छ्रइति ॥ ८२ ॥ अथ स्तेयाः मनुः धान्यान्नधनचौर्याणिकृत्वाकामाद्द्विजोत्तमः स्वजातीयगृहाण्येव कृच्छ्राद्देवविशुद्ध्यति ॥ ८३ ॥ मनुष्याणांतुहरणे स्त्रीणांक्षेत्रेगृहस्यच कूपवापीजलानांच शुद्धिश्चांद्रायणंस्मृतं ॥ ८४ ॥ द्रव्याणामल्पसाराणां स्तेयंकृत्वान्यवेश्मतः॥ चरेत्सांतपनंकृच्छ्रं तंनिर्यात्यात्मशुद्धये ॥ ८५॥ भक्ष्यभोज्यापहरणे पानशय्यासनस्यच पुष्पमूलफलानांच पंचगव्यंविशोधनम् ॥ ८६ ॥ अस्यार्थः धनशब्देन सुवर्णव्यतिरिक्तं धनं सारद्रव्यं धान्यंचदशकुंभपरिमितं कुंभश्च पंचसहस्रपलपरिमाणः अथतल्लक्षणं अष्टमुष्टिर्भवेत्किंचित्किंचिदष्टौचपुष्कल पुष्कलानिचचत्वारि आढकः परिकीर्तितः ॥ ८७ ॥ आढकानिच चत्वारि द्रोणइत्यभिधीयते दशद्रोणा भवेत्खारी कुंभोपिद्रोणविंशतिः ॥ ८८ ॥ इतिस्मृत्यर्थसारे एवंक्षत्रियवैश्यादयोपि स्वजातीय संबंधि धान्यापहरणे पादोनार्द्ध पादपरिमित नवषट् त्रिमासपरिमित कृच्छ्राचर्य्यायोग्या कूपवापीभ्यां जलविशेषेण घटादिजल व्यावृत्त्यर्थं तेनसंकल कूपवापीना मपहारे द्रष्टव्यं निक्षेपस्यापहरणं नरा श्वरजतस्य च भूमि वज्र मणीनांच रुक्म स्तेयसमंस्मृतं ॥ ८९ ॥ पैठीनसिः भक्ष्यभोज्यान्नस्योदरपूरणमात्रहरणे त्रिरात्रमेकरात्रंवा पंचगव्याहंताहरणी यद्द्रव्यस्याल्पत्व बहुत्वापेक्षयाज्ञेयं पुरुषाहारत्रयपरिमित मूल्य लभ्य तृणकाष्ठवृक्षशुष्कान्नस्यच तंडुलादिर्गुरुवस्त्र चर्म मांसानां मध्ये एकस्यहरणे त्रिरात्रम् मनुः मणिमुक्ताप्रवालानां ताम्रस्य रजतस्यच अयःकांस्योपलानांच द्वादशाहंकणान्नता ॥ ९०

द्वादशाहं तंडुलकणभक्षणंकार्यं सर्वत्रसक्तत् अभ्यास देशकालद्र व्य स्वामि गुणा दौर्गत्यापेक्षया उत्कृष्टाय कृष्टद्रव्या पहारविष यसमीकरणं समाधेयं कार्पासकीटजीर्णानां द्विशफैकशफस्यच प क्षिगंधौषधीनांच रज्वाश्चैवत्र्यहंपयः ॥ ९१ ॥ कार्पास कृमिकोश जीर्णानां वस्त्राणां द्विशफैक शफस्यच गवाश्वादेः पक्षिणां शुकादि नां गंधानां चंदनप्रभृतीनांरज्ज्याहरणे प्रत्येकं क्षीराहारःजाबालः अश्व गो भूमिकन्यांश्च हत्वाचांद्रायणंचरेत् क्षुद्रान्पशूंश्चापहृत्य प्राजापत्यंसमाचरेत् ॥ ९२ ॥ गुडकार्पासधान्यानि सर्पिर्लवणमेव च पक्कान्नमौषधंतैलं शय्यांवासउपानहौ ॥ ९३ ॥ कांस्यायस्ता म्र सीसंवा अर्ध्वंकृच्छ्रार्द्धमाचरेत् अर्ज्वं शंखशुक्त्यादि उदकंफ लमूल्येषु पुष्पपर्णसुगंधिषु मृद्भांडमधुमांसेषुकृच्छ्रपादोविधीयते ॥ ९४ ॥ शंखः यस्ययस्यतु वर्णस्य वृत्तिच्छेदंसमाचरेत् तस्यत स्यवधेप्रोक्तं प्रायश्चित्तंसमाचरेत् ॥ ९५ ॥ अपहृत्यतुवर्णानां भू मिंविप्रो प्रमादतः प्रायश्चित्तंवधप्रोक्तं ब्राह्मणानुमतेचरेत् ॥ ९६ ॥ गजाश्वस्यापहरणं मणीनां रजतस्यच धनापहरणंचैव कुर्यात्संव त्सरःव्रतं। ९७ तिलधान्यान्नवस्त्राणां शय्यानामामिषस्यचसंवत्स रार्द्धंकुर्वीत व्रतमेतत्समाहितः ॥ ९८ ॥ तृणेक्षु काष्ठ तंत्राणांरसानाम पहारकः मासमेकं व्रतंकुर्याद्दुग्धानांसार्पिषांतथा ॥ ९९ ॥ लवणानां गुडानांच मूलानांकुंकमस्यच मासार्द्धंतुव्रतंकुर्यादेतदेवसमाहि तः ॥ १०० ॥ सर्वत्रशंखवाक्ये व्रतशब्दो गोमूत्र श्यावकाहारपरः हारीतः रजतस्तेये चांद्रायणं अतिकृच्छ्रं ताम्रे कांस्ययसे प्राजाप त्यं सर्वमेव स्तेय प्रायश्चितं अपहृत्य तत्स्वामिने प्रदायैवकार्य मित्याह विष्णुःदत्वैवापहृतं द्रव्यं धनिकस्याभ्युपायतः प्रायश्चि त्तंततः कुर्यात्कल्मषस्यापनुत्तये ॥ १०१ ॥ हारीतः तिल पुष्प मूल फल पक्कान्न विक्रये सोमापानं लाक्षा लवण मधु मांस तैल

क्षीर दधि घृत तक्र चंदन सुवाससा मेकतम विक्रये चांद्रायणं तथोर्णिकेशिके सरिभू धेन्व नडु द्वेश्म शस्त्र विक्रयेच भक्ष्य मां स स्नाय्वस्थि शृंग नख शुक्ति विक्रये ततकृच्छ्रः हिंगु गुग्गुल स र्जरस हरिताल मनःशिलांजन गैरिक लाक्षा लवणमणिमौक्ति क प्रवाल दंतशंखवेत्रवैणवमृन्मय विक्रयेषु च आराम तडाग उ दपान पुष्करिणी पूर्वस्वकृत विक्रयेषुच त्रिषवणं स्नाप्या धःशा यी चतुर्थकालभुक्संवत्सरेण पूतोभवति हीनमानो न्मतमापने प्रस्थादि तन्माने तुलादि तैर्धान्यादि संकीर्णं मिश्रितं शंखलि खितौ शस्त्र बंधन भूम्येक शफ विक्रये प्राजापत्यं चरेत् गृहप्रति प्रपोद्यानाराम सभा तडाग पूज्य सेतु विक्रयं कृत्वा ततकृच्छ्र माचरेत् बंधनंनिगडादि आगमेतिपाठे आगमोवेदः नविक्रेया णि तिलतैल दधि क्षौद्र लवण द्राक्षा मद्य मांस कृतान्न स्त्रीपुरु ष हस्त्यश्व गो वृषभगंध रसे क्षौम कृष्णाजिन सोमोदक नी ली विक्रयात्सद्यः पतति ब्राह्मण संवत्सरं ततकृच्छ्र माचरेत् अ न्यथापतितां व्यष्टे रसंभाष्यः शूद्रधर्मा काष्ट मौनी हस्तसंज्ञाभि रपि वाक्यार्थंनकुर्यात् शंखः धारयित्वा तुलांवक्रां विषंसंस्कारयन् वणिक् सुरालवणमद्यानां कृत्वाक्षीरस्यविक्रयं लाक्षायाश्चैव मांस स्य कुर्यादर्धं महाव्रतं विक्रेता प्राणिनामब्दं तिलस्यच तथाचरे त् भूयोभ्यास विषयमेतत् महाव्रतंद्वादशाब्दं सुत सुताविक्रये चांद्रायणं त्रैमासिकंवा आपदि ततकृच्छ्रं अत्यंतापदि सांतपनं पुत्र विक्रये द्विगुणं सर्वत्र एकपुत्रस्यानापदिकार्यं सुत विक्रये त्रि कालस्नायी अधः शायी चतुर्थकालाशी वत्सरेण शुद्ध्यति कन्या विक्रयेणतदर्धं कामतो ऽनापदि अनेकपुत्रस्य सुतविक्रये चांद्रं आपद्येकपुत्रस्य कामतः सुतविक्रये चांद्रं अथपारदार्यं संवर्तः मातृस्वस्रेयीं भगिनीं स्वस्रीयांपितुरेवचमातुलस्य सुतागत्वाचरे

श्चांद्रायणव्रतं ॥ १०४ ॥ मातुलानीं सनाभिंच स्नुषां मातुस्स
नाभिकां एता गत्वास्त्रियो मोहात्पराकेणविशुद्ध्यति ॥ १०५ ॥
एतदेवमतिपूर्वं वीर्योत्सेकात्प्राग्निवर्तौ अल्पत्वात् सनाभिभ
गिनी ज्ञानविषये गुरुतल्पसमं मनुः गुरुतल्पव्रतं कुर्याद्रेतः सि
क्तास्वयोनिषु सख्युः पुत्रस्यचस्त्रीषु कुमारीष्वंत्यजासुच
॥ १०६ ॥ स्वयोनिषुसोदर्य भगिनीषु यमः स्नुषापितृस्वसा
माता सखीमातृस्वसा सुता मातुलानी सुताश्वश्रूर्गत्वासंघायते
द्विजः॥ १०७॥ वशिष्ठः आचार्यपुत्र शिष्यभार्यासु स्वयोनिषु
कुमारीषु पतितासु कृच्छ्राब्दपादंचरेत् ॥ १०८॥ संवर्तःगुरो
र्दुहितरंगत्वा चांद्रायणम् वाशिष्टः ब्राह्मणश्चेद्ब्राह्मणीं परदारां
गच्छे दब्दकृच्छ्रंचरेत् ॥ १०९ ॥ संवर्तः श्यालिकागमऽहोरात्रो
षित ऊर्ध्वंतप्तकृच्छ्रंचरेत्पितुर्भार्यांमातृवर्जं मातुर्भगिनीं सपत्नी
जां भगिनींगत्वा तप्तकृच्छ्रं कुमारिगमनेच सुमंतुः समानगोत्रप्र
वरे गत्वा कूष्मांडैर्होमं त्रिरात्रमुपवासश्च पितृव्यभार्य्यां मातु
र्भगिनीं श्वश्रूं धात्रीं गत्वा तप्तकृच्छ्रद्वयं कनिष्ठभ्रातुर्भार्यां काम
तो गत्वा सांतपनं कृच्छ्रं चांद्रायणमथवा चांद्रायणं वृषलीविष
यमेतत् तथा मातुः स्वस्त्रीयां पितृव्यतनयांच तप्तकृच्छ्रं गुरोर्दु
हितरं गत्वा पराकः भागिनेयीं गत्वा चांद्रायणं गुरुरत्राचार्यः हा
रीतः चांडाली पुष्कसीं व्याधीं स्नुषां तद्भगिनीं सखीं मातुः पि
तुः स्वसारंच विक्षिप्तां शरणागतां ॥ ११० ॥ मातुलानीं स्वसारं
च सगोत्रा मप्यनिच्छतीं शिष्यभार्यां गुरोर्भार्यांगत्वाचांद्रायणं
चरेत् ॥ ११ ॥ कन्यादूषी प्राजापत्यं चरेत् द्विविधोदूषकः यो
निक्षतकरणं मिथ्या तद्दोषस्यापनंच सवर्णेचांद्रं त्रैमासिकंवा
आनुलोम्येना सवर्णेमासं पयःपानं कायंवा प्रातिलोम्येतु क्षत्रि
यवैश्ययोः कृच्छ्राब्द ग्रीष्म वर्ष हैमंतेषु क्रमेणातया भ्रावका ज

लाशयपूर्वकं मास गोमूत्र पावकपानं शूद्रस्यतु विप्रादि कन्या
दुषणेवध एव अत्यंताभ्यासे सवर्णस्यापि कृच्छ्राब्दं संवर्तः शूद्रां
तु ब्राह्मणोगत्वा मासं मासार्द्धमेववा गोमूत्रयावकाहारो तिष्ठेत्त
त्पापमोक्षकः॥ १२॥ मतिपूर्वके मासं अमतिपूर्वके मासार्द्धं त
थाक्षत्रिया वैश्यागमने मासं मासार्द्धं तप्तकृच्छ्रंचरेत् अश्व जनाग
मने प्राजापत्यं मातृ पितृ पक्षासंबद्धां गोगमने कृच्छ्रं चांद्रायणं
विष्णुः ब्राह्मणस्य क्षत्रियागमने सानुबंधेऽ निच्छंत्या गोघ्नं प्रा
यश्चित्तं त्रैमासिकं वैश्यागमने चांद्रायणं शूद्रागमने सांतपनं यमः
स्वैरिणीगमने ब्राह्मणो ब्राह्मणींगत्वा द्विजेदद्यान्मृगाजिनं
क्षत्रियायांधनुर्दद्यात् वैश्यायामायसीं शिलां॥ २३ ॥ शूद्रांगते
नविप्रेणतंडूलकुंभाः प्रदीयते त्रिरात्रोपोषितः स्नात्वा दद्यात्संमा
र्जनींतथा ॥ १४ ॥ इदमत्यंतानिपतानां ब्राह्मण्यादीनांगम
ने शंखः तिर्यग्योनिषु गोवर्जं सचैलं स्नात्वौषधिभारं दद्याद्गो
भ्यः प्रायश्चित्तांतरासमर्थविषयमेतत् दारव्यतिक्रमी खराजिनं
बर्हिर्लोमकं परिधाय दारव्यतिक्रामणे भिक्षांदेहीति सप्ता
गाराणिचरेत् साब्दं त्रिःषण्मासन् स्त्रियास्तु भर्तृव्यतिक्रमे
कृच्छ्रं द्वादशरात्राभ्यासस्तावतंकालं निरंतरे आपस्तंबोक्तं
चरेत् चतुर्विंशतिमते वृषल्यांजनितापत्यः त्रीणिवर्षाणिचतु
र्थे समये नक्तंचरेत् चांडालींतु द्विजोगच्छेत्कथंचित्काममो
हितः त्रिभिः कृच्छ्रैर्विसुध्येत प्राजापत्यानु पूर्वकैः ॥ १५॥
पुष्कसीगमनेचैव कामतो ऽकामतोपिवा कृच्छ्रं चांद्रायणंचैव प्र
कुर्य्यात्पापमोचनं ॥ १६ ॥ काम कृच्छ्रं कामत श्चांद्रायणं कृ
च्छ्रातिकृच्छ चांद्रायणानुवृत्तौ बोधायनः एतेनचांडाली व्यवायो
व्याख्यातः अबुद्धिपूर्वको ऽभ्यास विषयमेतत् संवर्त्तः नटीं शैलु
षिकींचैवरजकीं वेणुजीविनीं गत्वाचांद्रायणं कुर्यात्तथाचर्मोप

जीविनीं ॥ १७॥ अकामतो ऽभ्यास विषयमेतत् रजक व्याघ्रशै लूषवेणुचर्मोपजीविनीं कामे तस्तुयदागच्छेत्कुर्याच्चांद्रायणद्वयंअ त्रिः नट नर्तक गायक गांधर्व गांधिक सूत मृतक वैणविक कुश लव आंध्र द्रविडशक कांबोज वारवाल्हीक खसोंगगोनर्दीनामभो ज्यान्नानामप्रतिग्राहिणां भुक्त्वा प्रतिगृह्यच स्त्रीगमने रहस्ये रह स्यं प्रकाशे प्रकाशंचरेत् रहस्ये तप्तकृच्छ्रं तुचरेद्विप्रः समाहितः प्रकाशेचैंदवंकुर्यात्सकृत्कृत्वाद्विजोत्तमः रहः पापेत्वविज्ञाते चरे त्सांतपनंनरः विज्ञाते तप्तकृच्छ्रंवा एषएव विधिः सदा ॥ २० ॥ उशनाः गर्भंकृत्वां त्यजातानां चरेच्चांद्रायणव्रतं अज्ञानेदंज्ञा नतस्तु चांडाल्यां गर्भमारोप्य गुरुतल्पव्रतंचरेत् ॥ २१॥ यमः रजकश्चर्मकारश्च नटो बुरुड एवच कैवर्तमेदभिल्लाश्च सप्तैते अंत्यजाः स्मृताः ॥ २२ ॥ एषांभुक्त्वा स्त्रियोगत्वा पीत्वाचप्रतिगृ ह्यच ज्ञानात्कृच्छ्राब्दमुद्दिष्ट मज्ञानादैंदवद्वयं ॥ २३ ॥ संवत्स रात्प्राग त्यंताभ्यासेएतत् आपस्तंबः म्लेच्छी नटी चर्मकर्त्री रज की बुरुडीतथा एतासांगमनंकृत्वा चरेच्चांद्रायणव्रतं ॥ २४ ॥ का मतोऽभ्यासेएतत् हारीतः कैवर्ती ध्वजिनीचैव याश्चान्या अंत्यसं भवाः कामतस्तु वसन्विप्र एतान्येवसमाचरेत् ॥ २५ ॥ द्वौमासौ भक्ष्य भक्ष्येण द्वौमासौ यवपावकैः द्वौमासौ पंचगव्येन षण्मा सांश्चरितव्रतः ॥ २६ ॥ एवंशुद्धि मवाप्नोति प्रायश्चित्ती नरोत्तमः संवत्सरात् प्रागत्यंताभ्यासे एतत् ऊर्ध्वंतुमरणांतिकं आपस्तंबः चांडाल श्वपच कपालव्रतिनां स्त्रियोगत्वा पाराकव्रतं अकामतः कामतस्तु प्रसूनौ वातत्समः कामतो ब्राह्मणीं शूद्रसमतांगच्छ तां त्रैवार्षिकं कृच्छ्रं भूयोभ्यासे गमने चैतत् हीनवर्णगां ब्राह्मणीं गच्छन् विप्रः कृच्छ्राब्दंकुर्यात् सकामतोभ्यासे उशनाःगमनेतु व्रतंयत्स्थाहुँमतद्विगुणंचरेत् एवंस्त्रीणामपि इच्छयाव्यभिचारे अ

निच्छया अर्द्धतत्त्वकृच्छ्रं पराकंवा समानविषये एतत् बुद्धिपूर्वके गर्भपर्यंते क्षत्रियवैश्यगमने त्याज्या आपस्तंबः स्त्रियाभर्तुर्व्यतिक्रमे कृच्छ्रं द्वादशरात्र्यभ्यासः तावंतं कालं कामतो ऽत्यंताभ्यास विषये एतत् उशनाः व्यभिचारिणी पत्याज्ञया चांद्रायणं प्राजा पत्यंवाचरेत् कामकारे अनिच्छयाचप्रष्ठव्यं मनूक्त कृच्छसहित चांद्रायणे सामर्थ्यै चांद्रायणे बलात्कार उपभुक्ता विषयः प्राजापत्यः संवर्तः बलात्प्रमथ्य भुक्ताचेदद्द्यमानेन चेतसा प्राजापत्येन शुद्धिःस्या तत्तस्याःपावनंस्मृतं ॥२७॥ अत्रासामर्थ्यै ऋष्यशृंगआह बलेनकामिता नारी सवर्णेनकथंचन प्रायश्चित्तं त्रिरात्रंस्यात्तस्याः शुद्धिसमादिशेत् ॥ २८॥ यदितु ब्राह्मणीं गच्छेत् क्षत्रियो वैश्यएववा गोमूत्र यावकैं मांसात्तदर्द्धाद्विशुद्ध्यति ॥ २९ ॥ वैश्यगमनेमासः क्षत्रियगमने पक्षः वैश्यगमने मासात् क्षत्रियाच्च विशुद्ध्यति क्षत्रियगमने मासार्द्धात्तु ब्राह्मण्याः शूद्रसंपर्के कथंचित्समुपागते चांद्रायणेनशुद्धिःस्या त्तदस्याःपावनंस्मृतं ॥३०॥ बलात्कारविषये वृद्धप्रचेताः विप्रा शूद्रेणसंगम्य वसेत्तस्मात्प्रसूयते प्रायश्चितं स्मृतंतस्याः कृच्छ्रं चांद्रायणत्रयं ॥ ३१ ॥ चांद्रायणे द्वेकृच्छ्रंच विप्रायां वैश्यसंगमे कृच्छ्रंचांद्रायणंचैव विप्रायाःक्षत्रिसंगमे ॥ ३२॥ शूद्रंगत्वा क्षत्रिया तु कृच्छ्रंचांद्रायणद्वयं चांद्रायणं सकृच्छ्रंचचैरंद्वेश्येनसंगमे॥३३ शूद्रंगत्वा चैरंद्वेश्या कृच्छ्रंचांद्रायणद्वयं आनुलोम्येन विहितं कृच्छ्रं पादावरोपितं पादन्हासः अधमवर्णनउत्तमवर्णस्य स्त्रीगमने अनुलोमेन प्रायश्चित्तमिदंततश्चक्षात्रियायां विप्रगमने कृच्छ्रः वैश्यायांपादद्वयं शूद्रायांविप्रगमने पादः क्षत्रियस्य वैश्यागमने कृच्छ्रः शूद्रायां पादद्वयं चांद्रायणं सजातीयैः पौनःपण्येसकृच्छ्रकं अंगुष्ठगमनेकल्पं तथैवाज्ञान संगमे पौनः पुन्ये

अभ्यासःतत्रबुद्धिपूर्वकेकृच्छ्रंअंगुष्टाभिचारिणांप्रति अबुद्धि पूर्वं
कगमने चकल्पं परिषदा प्रायश्चितमित्यर्थः ऋष्यशृंगः कामिता
स्यादथांग्यैर्यासकृच्छ्राब्दंसमाचरेत् अंतर्वत्नीतु युवतिः कामिता
सांत्ययोनिना प्रायश्चित्तंनवैकुर्या यावद्गर्भोननिसृतः नप्रचारं
गृहे कुर्यान्नचांगादिप्रसाधनं नशयीतसमं भर्त्रा नवाभुंजीत बां
धवैः प्रायश्चित्तं मृतेगर्भे विधिकच्छ्रादिकंचरेत् हिरण्यमथवाधेनुं
दद्याद्विप्रायदक्षिणां ॥ ३८ ॥ अंत्यावसायिनस्तु चांडालाः श्वप
चः क्षत्ता सूतो वैदेहिकस्नुषा सागंधायी गवोचेति सर्वेतेत्याकु
सामिनः ॥ ३९ ॥ अथक्रमः ब्राह्मण्यां शूद्राज्जातश्चांडालः क्षतु
रुग्रायांजातः श्वपचः उग्राच शूद्रायां क्षत्रियाज्जाता । शूद्रा क्षत्रि
ययोरुग्राः इत्यमरकोशात् क्षत्रियाच्छूद्रकन्यायांक्रूराचारविहार
वान्क्षत्रशूद्रवपुर्जंतुरुग्रोनामप्रजायते इति मनुराह ॥ ४० ॥ क्ष
त्रियायांशूद्राज्जातः क्षत्ता ब्राह्मण्यां क्षत्रियाज्जातः सूतवैश्या
ज्जातोवैदेहिकः क्षत्रियायां वैश्याज्जतो मागधः वैश्यायां शूद्राज्जा
तो अयोगवः कौमारदारत्यागी शूद्रयाजको गुरोः प्रतिहता सुरा
भिन्न मद्यपो ब्राह्मणवृत्तिघ्नःकुटव्यवहारी मित्रध्रुक् शरणाग
तघाती प्रतिरूपवृत्तिश्चैते ऽमत्याप्रवृत्ता त्रैमासिकं कुर्युः मत्या
षाण्मासिकं अभ्यासे कृच्छ्राब्दं वशिष्टः शूद्रश्चेद्ब्राह्मणी मभि
गच्छे द्वीरणै र्वेष्टयित्वा शूद्रमग्नौप्रास्येत् ब्राह्मण्याश्च सिरसि
वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथ
मनु संव्राजयेत् पूताभवतीति विज्ञायते एवंवैश्यं लौहि
त वस्त्रैर्वेष्टयित्वा क्षत्रियंतु शरपत्रैर्वेष्टयित्वा ब्राह्मणींतु पूर्ववत् वै
श्यं गौरखरे क्षत्रियविषये कृष्णखरे आरोप्य पूर्ववत् सर्पिषा अ
भ्यज्य नग्नां महापथं संव्राजयेत् एवंवैश्यो राजन्यायां शूद्रश्च वै
श्यायां पूता प्रायश्चितयोग्याभवति मनसा भर्तुरभिचारी त्रिरात्रं

यावकं क्षीरोदनंवा अधः शयीत ऊर्ध्वंत्रिरात्रादप्सु निमग्नायाः सावित्र्यष्टसहस्रेण शिरोभिर्जुहुयात् पूताभवति वाक्संबंधे चैतदेव मासंचरित्वोर्ध्वं मासादप्सु निमग्नायाः सावित्र्यष्टसहस्रेण शिरोभिर्जुहुयात् व्यपायेतु संवत्सरं घृतपट्टंधारयेत् गोमययुते कुशप्रस्तरेवा भुंजानोधः शयीतऊर्ध्वं संवत्सरादप्सु निमग्नायाः सावित्र्यष्टसहस्रेणशिरोभि र्जुहुयात् पूताभवतीति विज्ञायते संवरणः चांडालं पुष्कलं म्लेंच्छं श्वपाकं पतितंतथा एतान्गत्वा स्त्रियो श्रेष्ठा कुर्युश्चांद्रायणत्रयं ॥ ४१ ॥ श्रेष्ठाः श्रेष्ठावर्णास्त्रियः चतुर्विंशतिमतात् कृच्छ्राद्ब्राह्मणीकुर्यात् विप्रस्यगमनेसति क्षत्रियस्यचरेत्कृच्छ्रं विशः सांतपनंचरेत् ॥ ४३ ॥ शूद्रस्यगमनेचैव पराकंचसमाचरेत् वीर्यक्षेपात्प्रायश्चित्तौ सत्यामिदंतथा विप्रगर्भे पराकः स्यात्क्षत्रियस्यतथैवच विशस्तदेवकर्तव्यं पराकेणसमन्वितं ॥ ४४ ॥ शूद्रगर्भे भवेत्याग स्तत्रश्चांडालदर्शनात् इदानीं स्त्रीवधप्रायश्चित्तं याज्ञवल्क्यः दुर्वृत्तां ब्रह्म नृप विट् शूद्र योषां प्रमाद्यतु हति धेनु बस्त मविः क्रमाद्देयाद्विशुद्धये ॥ ४५ ॥ दुर्वृत्ता स्वैरिणी ब्राह्मणादिपोषितो हत्वायथावर्णक्रमेण हत्यादिकं ब्राह्मणायदद्यात् हति श्चर्ममयंजलभांडं धेनुः प्रसिद्धा बस्तः छागः अविर्मेषः इत्यादि दंडदक्षिणात्वेन सुवर्णमपिदद्यात् तत्परिमाणं चानुबंधापेक्षयाकल्प्यं अप्रदुष्टांस्त्रियंहत्वा शूद्रहत्याव्रतंचरेत् नप्रदुष्टाअप्रदुष्टाईषद्दुष्टेति यावत् सवर्णे सकृद्व्यवचरितां तांब्राह्मणादिस्त्रियंहत्वा शूद्रहत्याव्रतं षण्मासिकंचरेत् दशधेनुर्वादद्यात् शातातपः षाण्मासान् स्त्रीघाती प्राजापत्यं चरेद मतिपूर्वंतु लारोपणं व्यासः अकामतः स्त्रियंहत्वा ब्राह्मणीं वैश्यवच्चरेत् कामतोद्विगुणंप्रोक्तं प्रदुष्टायांनकिंचन ॥ ४६ ॥ पुण्यालोकान्नवाप्नोति शूद्रघ्नां यस्तुघातयेत् पतिघ्नीमथगर्भघ्नीं याहिसंकरकारि

का ॥ ४७॥ प्रचेताः अनर्तुमतीं ब्राह्मणींहत्वा कृच्छ्राब्दं षण्मा
संवा क्षत्रियांहत्वा षण्मासंत्रयंवा वैश्यांहत्वा मासत्रयं सार्द्धमा
संवा शूद्रांहत्वा मासं पादोनंवा ज्ञाताज्ञातविषयं अन्यत्रच ब्राह्म
णीवधे नवतिधेनवःक्षत्रियवधे पंचचत्वारिंशद्धेनवः वैश्यवधे सा
र्द्धद्वाविंशतिधेनवः शूद्रावधे सपादैकादशधेनवःअज्ञानकृतेऽर्द्धं अ
ज्ञानतो यद्वर्णवधे प्रायश्चित्तं ज्ञानतोगर्भवधे तद्वर्णे तदेव तद्वर्णा
त्रेयीवधेच तेन ज्ञानतो ब्राह्मणीगर्भवधे षड्वार्षिकं क्षत्रियागर्भव
धे त्रैवार्षिकं वैश्यागर्भवधे सार्द्धवार्षिकं शूद्रागर्भवधे नवमासिकं
कृच्छ्रं याज्ञवल्क्यः गर्भहाच यथावर्णं तथात्रेयीनिषूदनः ॥४८ ॥
यत्तुविशिष्टेनोक्तंःअनात्रेयीं ब्राह्मणीं राजन्यहिंसायां राजन्यां वै
श्याहिंसायां वैश्यांशूद्रहिंसायां शूद्रां संवत्सरमिति तत्सहचारिणी
वधविषयं अत्रच शूद्रां हत्वा संवत्सरमित्यस्य भ्रूणहत्या प्रायश्चि
त्तमिति विशेषः मनुः अस्थिमतांतु सत्वानां सहस्रस्यप्रमापणं
पूर्णेचानस्यनश्यंतु शूद्रहत्याव्रतंचरेत् ॥ ४९ ॥ शूद्रहत्याव्रतं ष
ण्मासिकं ब्रह्महत्याव्रतंदशधेनुदानंवा यमः कृमिकीट पतंग पि
पीलिका भ्रमर दंश मशक मक्षिकाणां सहस्रंहत्वा शूद्रवधं प्रा
यश्चित्तं कोकिल शुक कपोत कपिंजल कुक्कुट टिट्टिभ खर्जूर
खंजरीटकाकादीनां पुरुषभारवधे शूद्रवधप्रायश्चित्तं वशिष्टः मा
र्जार गोधा नकुल मंडूकाश्वपतत्रिणः हत्वात्र्यहं पिबेत्क्षीरं कृ
च्छ्रंवापादिकं चरेत् ॥ ५० ॥ प्रत्येकमिदममतिपूर्वकंचेत् मनुः
मार्जारनकुलौ हत्वा चाषंमंडूकमेवच श्वगोधोलूक काकांश्च
शूद्रहत्याव्रतंचरेत् ॥ ५१ ॥ यमः स्वानुऽकूल सर्प मार्जार मं
डूक कलविंक किकीदिवि गोधा गृध्रो लूक वायस मयूर ग्राम च
कोर शृगाल मूषकान् हत्वा एकैकस्यवधात् शूद्रवधः पैठीनसिः
काको लूक कृकलाश कंकरुक खर शृगाल शश बर्हिश्च मूषक च

क्रवाक हंस प्रवेणीक नकुल मंडूक बिडाल गोधा एतेषामेकैक
स्मिन् शूद्रवधाद्विहितः कल्प्यः पयःपिबेत्रिरात्रंवा योजनंवाध्व
नोव्रजेत् उपस्पृशेत्सुवंत्यांवा सूक्तंवाब्दैवतं जपेत् ॥५२॥ अस्या
र्थः अबुद्धिपूर्वकमार्जारादीनांवधे त्रिरात्रं क्षीरंपिबेत् असमर्थत
रोतरं विष्णुः मार्जार सर्प नकुल श्व शृगाल मृगेषु च प्रमादाद्धन
नेकार्यः कृच्छ्रपादोविशुद्धये ॥ ५३॥ हारीतः मर्कटश्व भास मा
र्जार जालपाद बर्हिणां एकतमवधे गां ब्राह्मणायदद्यात् ॥ ५४॥
कश्यपः उष्ट्रंच स्त्रीवधे ब्राह्मणाय निवेद्य षड्रात्रोपितः चीर्णांतेति
लान्दद्यात् लघुविष्णुः हरिच्छागोविक्रोष्टेषु गर्दभेषुच मारणा
त् प्राजापत्यद्वंद्वमेवेह प्रायश्चित्तं विधीयते ॥ ५५ ॥ सकृदमति
पूर्वकहनने एतत् गज नीलवृषः पंचशुके वत्सो द्विहायनः खरा
जमेषेषु वृषोदेयः क्रौंचेत्रिहायनः ॥ ५६ ॥ शकटस्य वोढा किं
च हंस श्येन कपि क्रव्याज्जलस्थलशिखंडिनः भासंच हत्वा द
द्या द्गांसक्रव्यादेतुवत्सिकां ॥ ५७ ॥ हंसादीन्हत्वागां विप्राय
दद्यात् क्रव्यं अपक्वं मासं योत्तिसक्रव्यात् व्याघ्रशृगालादिः ज
लस्थल शब्दाभ्यामंतश्चारिणः पक्षिणो लक्ष्यंते शिखंडी मयूरः
मनुः अश्वं हत्वावस्त्रंदद्यात् चतुर्विंशतिमतात् सिंह व्याघ्र वृका
श्वांश्व ऊष्ट्रान् हत्वाचदंष्ट्रिणः हत्वासरीसृपादींश्व दिनमेक
मभोजनं ॥ ५८ ॥ मत्स्यंच कृकलासंच हत्वामंडूकमेवच
उपोष्य सप्तरात्रंच गव्येनशुद्धिमर्हति ॥ ५९ ॥ हंसं बकं
बलाकांच शारिकां शुकतित्तिरिं सारसं चाष भासादि हत्वाकृ
च्छ्रंसमाचरेत् ॥ ६० ॥ कपोत बक काकानां गृध्राणांच हतेद्विजः
सर्वेषांपक्षिणांचैव दिनमेकमभोजनं ॥ ६१ ॥ उरगेष्वायसोदंडः
षंडके त्रपुशीषकं वराहेतुहतेदद्यात् घृतपूर्णोघटस्तथा ॥ ६२ ॥
उष्ट्रेहतेतु गुंजा परिमाणं सुवर्णंदेयं हयवधे कौशेयंवस्त्रंदेयं पला

ल भारकंखंड सैसकं चैकमासिकं तित्तिरीं तिलद्रोणं शुके द्विहाय नंवत्सं कृच्छ्रशब्दः प्राजापत्येरूढः दानाशक्तौ प्राजापत्याभ्यास युक्तः तपःसंवर्तः सर्वासामेवजातीनां मृगाणां वनचारिणां अहोरात्रोषितस्तिष्ठेत् जपेच्चजातवेदसं ॥ ६३ ॥ जाबालः हस्तिनं तुरगंहत्वा हिरण्यंगां तथैवच॥ महा सांतपनंकुर्या द्गोभूकन्यातथैवच ॥ ६४ ॥ पराशरः हंससारस क्रौंचानां बककुक्कुटयोस्तथा ॥मयूरमेषयोर्घाते एकभुक्तेनशुद्ध्यति ॥ ६५ ॥ मद्गूनांटिट्टिभानांच शुक पारावतस्यच आडिंबकस्य घातेन शुद्ध्येद्वै नक्त भोजनात् ॥ ६६ ॥ चाष काककपोतानां सारी तितिरघातकः अंतर्जलेउभे संध्ये प्राणायामेन शुद्ध्यति ॥ ६७ ॥ गृध्रश्येन विहंगानामुलूकानांच घातने ॥ अपक्वाशीदिनं तिष्ठेद्द्विकालंमारुताशनः ॥ ६८ ॥ द्विकालः सायं भोजनकालः हारीतः वाजि रासभ वधे कृच्छ्रं चांद्रायणं वृथापशुवधे प्राजापत्यं विष्णुः अनुक्तमृगवधे त्रिरात्र मुपवसेत् सुमंतुः यूक मशक मक्षिका मत्कुण पूरिकीट मातृवाह करालो गंडूपदाना मन्येषांस्तथा वानस्थिमतां च वधे प्राणायामः अस्थिमतां पणोदेयः वृक्षादीनांच्छेदने जप्यमृक्शतम् गुल्माः कुंदादयः लताः अतिपुष्पादय स्तथा फलादीनांतु वृक्षाणां छेदने जप्यमृक्शतं गुल्मवल्लीलतानां चपुष्पितानांचवीरुधां ॥६९॥ फलदा आम्रादयः वल्लीनां गुडूच्यादीनां वृक्षशाखा सक्तानां पुष्पितानां चवीरुधांकुष्मांडादीनां प्रत्येकं छेदने पापप्रमोचनार्थं सावित्र्यादिऋक्शतंजपेत् सकृद् बुद्धिपूर्वकविषयं वेदितव्यं अन्नादिषु जातानांगुडादिरसजातानां उदुंबरादि फलाजातानां मधुकादि पुष्पोद्भवानांच वधे घृतप्राशनंपापशोधनं कर्षणपूर्वकजातानां औषधीनांषष्टिकादीनां वने चस्वयमुत्पन्ननांनीवारादीनां निष्प्रयोजनछेदने क्षीरी हार एक

महो गोरनुगमनं कुर्यात् यमः वृक्षलता गुल्मच्छेदने पादकृच्छ्रः फलवतां प्राजापत्यं नीलीवस्त्रं परीधाय भुक्तास्नानार्थमेवच त्रिरात्रंतुव्रतंकुर्यात् छित्वावृक्षंफलप्रदं ॥ ७० ॥ यमः गृहस्थः कामतः कुर्याद्रेतसःस्खलनंभुवि सहस्रंतुजपेद्देव्याः प्राणायामैः त्रिभिः सह ॥ ७१ ॥ वशिष्ठः नास्तिकः कृच्छ्रंद्वादशरात्रं कृत्वा विरमेन्नास्तिक्यात् तथानास्तिकः व्रतेत्वतिकृच्छ्रः स्वल्पकालेन नास्तिक्येतद्वर्तनेचैतत् चिरकालीनेतु शंखः नास्तिकं नास्तिकवृत्तिं कृतघ्नः कूटव्यवहारी मिथ्याभिशंसी त्येते पंच ब्राह्मणगृहे भैक्ष्यंचरेयुः वर्षंयावत् हारीतः पंचतयोऽवकाश जलशयनान्यनुतिष्ठेयुः ग्रीष्म वर्षाहेमंतसंवर्तः महापापीयसाभ्यां योभिशंसेन्मृषापरं अब्भक्ष्योमासमासीत सजापीनियतेंद्रियः ॥ ७२ ॥ महापापाभिशंसने सत्कृत्वेचे उपपातकशंसने चासंकृत्वेप्रायश्चित्तमिदं मिथ्याभिशस्तस्यापीदमेवप्रायश्चितं एतदेव वर्णाना मानुलोम्ये प्रातिलोम्ये पादोन द्विगुण त्रिगुणादयः कल्प्याः यमः क्रोधादुक्त्वात्वगम्यात्वं भार्यायांतुनरः क्वचित् प्रायश्चित्तंचरे त्कृच्छ्रं तस्यपापस्यशुद्धये ॥ ७३ ॥ प्राजापत्यंचरेद्विप्रः क्षत्रियोदिवसान्नव षड्रात्रंतुचरेद्वैश्यस्त्रिरात्रशूद्र एवच ॥ ७४ ॥ सुवर्चलाधिकारे हारीतः अनृताभिशंसनाक्रोशे गुरूणांमैथुनेषुच एकविंशति रात्रंतु पिबतामेवयत्नतः ॥ ७५ ॥ विष्णुः विप्रस्यवधसंयुक्तं कृत्वातुशपथं मृषा ब्राह्मणो यावकान्नेन तीव्रंचांद्रायणंचरेत् ॥ ७६ ॥ क्षत्रियस्य पराकंस्या त्प्राजापत्यंतथाविशः वृषलस्य त्रिरात्रंतु व्रतंशूद्रहणंचरेत् ॥ ७७ ॥ शंखः अभिशस्तो मृषाकृच्छ्रं चरेदाग्नेयमेवच निर्वपेत्तु पुरोडाशं वायव्यंचरुमेववा ॥ ७८ ॥ मिथ्याभिशस्तः प्राजापत्यंचरेत् आग्नेयं वायव्यं वा चरुं पुरोडाशं निर्वपेत् एतेपक्षाः पापस्य गौरव

लाघवतया व्यवस्थाप्याः बौधायनः त्रिरात्रांते घृतंप्राश्य गत्वो दक्यां विशुद्ध्यति एतच्च स्वभार्याया मतिपूर्वकगमने सकृद्गम नेज्ञेयं कामतः सप्तरात्रं अभ्यासेकामतः कृच्छ्रः कामतोऽत्यंता नवाच्छिन्नाभ्यासे नवमाब्दिकं कामतोऽभ्यासमात्रे सचैलंस्नानं व्याहृतिहोमःतथा प्रथमेन्हि पराकं द्वितीयेसांतपनं तृतीयेप्रा जापत्यं षण्मासोत्तरं गर्भिणीगमनेप्येवं शातातपः अनुदकं मू त्रपुरीषकरणे सचैलस्नानं महाव्याहृतिभिर्होमश्च रजस्वलाभि गमने चैतदेवामानुषीषुगोवर्जं वशिष्टः रजस्वलाव्यपाये कृष्ण वृषभंदद्याच्छुक्कलिंगं व्यपायोमैथुनं लिंगे लांछनं सकृद्गमने इ दं अमतिपूर्वके संवर्तः गोयोनिगमनंकृत्वा कृच्छ्रंचांद्रायणंस्मृतं ॥ ७९॥ मनुः अमानुषीषु पुरुष उदक्यांपापयोनिषु रेतः सिक्का जलेचैव कृच्छ्रं सांतपनंचरेत् ॥ ८० ॥ एतन्मतिपूर्वके साभ्यासे च परस्त्रीगमने एतस्मिन्नेवविषये ऽनिच्छंतीं गच्छंतं संवर्तः रज स्वलांतुयोगच्छे द्गर्भिणींपतितांतथा तस्यपापविशुद्ध्यर्थं यतिकृ च्छ्रंविशोधनं ॥ ८१ ॥ शंखलिखितौ रजस्वलावधूता वंधुकी गमने त्रिरात्रमुपवासो घृतप्राशनंच शंखः श्रोत्रियभार्यायां का मतो अत्यंताभ्यासे गर्भपर्यंतं गमने उदक्या गमनेतथा शूद्रह त्यायांच त्रैवार्षिकं व्रतंचरेत् बृहस्पतिः अकामात्पुष्कसीं गत्वा कामाद्गत्वारजस्वलां शिष्यभार्यांनरोगत्वा पराकेणविशुध्यति८२ शातातपः रजस्वलागमने सप्तरात्रं मानवेन सप्तरात्रं विषयं अत्र सर्वत्र निमित्तभेदात् पारादार्यनिमित्तंरजस्वलागमनं दिवागम नं पर्वगमनं निमित्तंच पृथक् पृथक् कार्यं ब्रह्महत्यांचकुर्वतः शा स्त्रोद्यमनादिनिमित्तंच अन्योन्य निरपेक्षनिमित्तभेदात् यत्रत्व निमित्तांतरा विनाभावि गुरुतल्पगमनं तत्र पारपार्यंनास्ति रज स्वलागमनं पृथक् ॥ ८२ ॥ निमित्तं अविनाभावविरहात् याज्ञ

वल्क्यः गोष्ठे वसन्ब्रह्मचारी मासमेकं पयोव्रतं गायत्रीजप्य
निरतो मुच्यतेऽसत्प्रतिग्रहात् ॥ ८३ ॥ ब्रह्मचारीजितेन्द्रियः
मनुःजपित्वात्रीणिसावित्र्या सहस्राणिसमाहितः मासंगोष्ठीपयः
पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥ ८४ ॥ इदंप्रतिगृहीतधनंत्य
क्त्वैव प्रायश्चित्तंकार्यं भिक्षामात्रेगृहीतेतु पुण्यंसत्यमुदाहरेत् प्र
तिग्रहेषु सर्वेषु षष्ठांशमुपकल्पयेत् ॥ ८५॥ देव्यालक्षजपेनैव मु
च्यतेऽसांप्रतिहात् ॥ ८६ ॥ देवीगायत्री उशनाः पतिताद्द्रव्य
मादत्ते भुंक्तेवाब्राह्मणोयदि कृत्वातस्यसमुत्सर्गमतिकृच्छ्रं चरेद्वि
जः ॥ ८७॥ अत्रदेवलः नवोत्तमानिचत्वारि मध्यमानिविधान
तः अधमानातिशेषाणि त्रिविधत्वमिदंविदुः ॥ ८८ ॥ अन्नं दधि
मधु त्राणं गो भूरुक्माश्व हस्तिनः दानादुत्तमदानानि उत्तमद्र
व्यदानतः ॥ ८९ ॥ विद्याचाच्छादनावास परिभोगौषधानिच
दानानि मध्यमानीति मध्यमद्रव्यदानतः ॥ ९० ॥ उपानत्प्रें
खपानानि छत्रपात्रासनानिच दीपिकाष्ट फलादीनि वरसंबहुवा
र्षिकं ॥ ९१ ॥ बहुत्वादर्थजातानां संख्याशेषस्तुनेष्यते अध
मान्यवशिष्टानि सर्वदानान्यतोविदुः ॥ ९२ ॥ अतिदानं इच्छां
योग्येविहितं त्रीण्याहुरतिदानानि गावःपृथ्वीसरस्वतीअत्रगाव
इति बहुत्वमविवक्षितं राज्ञःप्रतिग्रहंकृत्वा मासमप्सु सदावसेत्
षष्ठकालेसदाश्नंस्तु पूर्णेमासेप्रमुच्यते ॥ ९३ ॥ सुमंतुःशूद्रया
जकः सर्वद्रव्यपरित्यागात्पूतोभवति बोधायनः अप्रतिग्राह्य
स्य प्रतिगृह्य अयाज्यंवा याजयित्वा अनाद्यस्यवा अन्नमशि
त्वा तरत्समंधींजपेत् किंच त्रीन्कृच्छ्रानाचरेद्व्रात्ययाजकोतिचर
न्नपि वेदप्लावीयवाशब्दं त्यक्त्वा चशरणागतं ॥ ९४ ॥ क्षत्रि
यादीनांमूल्येनाल्यंकर्मकुर्वन् शातातपः पतितसावित्रीकान्नोप
नयेत् नाध्यापयेत् सचोद्दालकव्रतं चरित्वा पूतोभवति यःकरोति

यमः एषांप्रत्यापत्ति मार्गतां भैक्षान्नमपिभुंजानो द्विजश्चांद्रायणं चरेत् वशिष्ठः एतेनैवगर्हिताध्यापका व्याख्याता दक्षिणाध्या पकाश्च अक्षारलवणां रूक्षांपीत्वा ब्रह्मसुवर्चलां तस्योपनयनं कृत्वा व्यवहार्यस्तदाभवेत् फलंनागहृदेतोये ह्लावयेदविचारितं अर्थोत्सर्गेण यत्नांततस्मात्पापात्प्रमुच्यते ॥ ९६ ॥ फलंगू द्वादवासोर्थःपलंप्रायश्चित्तं वेदप्लावी वेदप्लावकः प्रतिषिद्धे देश कालेवा स्वयमशुचिश्चयोधीते यश्चप्रतिषिद्धमध्यापयति यश्च प्रतिषिद्धादधीतेचे त्येवमादिवेदविप्लावकः यश्च शरणा गतं प्राणरक्षार्थमागतं समर्थःसन् त्यजति उभौसंवत्सरं यवाहा रौ स्यातां मनुः शरणागतंपरित्यज्य वेदंविप्लाव्यचद्विजः संव त्सरंयवाहारस्तत्पापमपकर्षति ॥ ९७ ॥ हारीतः अनाश्रमी संवत्सरं प्राजापत्यंचरित्वा आश्रममुपेयात् द्वितीयेवर्षेऽ तिकृ च्छ्रं तृतीये कृच्छ्रातिकृच्छ्रं अतऊर्ध्वं चांद्रायणं आपद्विषयमेतत् अनापदितु त्रैमासिकं कन्यादूषी वृषलीपतिः कौमारदारत्यागी शूद्रयाजको गुरोरप्रतिकर्त्ता नास्तिको नास्तिकवृत्तिः कृतघ्नः कू टव्यवहारी मित्रध्रुक् एतेपंचतयोभ्रावकाशजलशयनान्यनुष्ठे युः ग्रीष्म वर्षा हेमंतेषु मासंगोमूत्र यावक मश्नीयुरिति अत्रक न्यादूषीशब्देन कन्यादूषकमात्रे विवक्षिते किंतु प्रातिलोम्येन यःकन्यादूषकः सएवप्रायश्चित्तभूयस्त्वात् तत्रैव तंद्दंडायलं स्म रति सकामस्त्वाऽनुलोम्येतु नदोषस्त्वन्यथावधः तत्रसवर्ण क न्यादूषणे त्रैमासिकं चांद्रायणंवा दोषानुसारेण कल्प्यं आनुलो म्ये दूषणेतु मासं कृच्छ्राति कृच्छ्रेचर्य्या पंचगव्यासनमित्यादि कल्प्यं शंखेन कन्यादूषी कृच्छ्रं अब्दंचरेत तदपि प्रातिलोम्ये कन्यादूषणविषयं शूद्रस्यतु प्रातिलोम्ये वधएव दूषणमात्रे कर छेद उत्तमायां वध स्तथेति दंडदर्शनात् आपस्तंबः नीलीभक्ष

णे चान्द्रायणं शंखलिखितौ बक बलाका हंस प्लवग खंजनक का
रंडव चक्रवाक कटधार गृहकपोत चरक पारावत पांडुशुक सा
रिका सारस टिट्टिभो लुक काकोल रक्तपाद जलपाद वाग्गुरु
चाष भाष वायस कोकिल शार्ङ्गलि कुक्कुटहारीत भक्षणेद्वादशरा
त्र मनाहारः गोमूत्रयावकं पिबेत् काकोलश्येनः एषामन्यतम
स्या त्यंत भक्षणाभ्यासे प्रत्येकं भक्षण समुदयेवैतत् शंखः म
त्स्यादंच तथामत्स्यात् मांडुकंभुजगंतथा मासमेकंव्रतंकुर्यात् भू
यश्चनचभक्षयेत् ॥ ९८ ॥ मनुः क्रव्याद् भूकरोष्ट्राणां कुक्कुटानां
च भक्षणे नरकाकखराणांच तप्तकृच्छ्रंविशोधनं ॥ ९९ ॥ शुष्का
णि भुक्तामांसानि भौमानि कवकानिच अज्ञातंचैवसूणास्थं एत
देवव्रतंचरेत् ॥ १०० ॥ भूमिजं वृक्षजंवापि छत्राकं भक्षयंतिये
ब्रह्मघ्नान्स्तान्विजानीया दिति यमेन वृक्षजस्यापिनिषेधात्
॥ १०१ ॥ सूणास्थं हिंसास्थानस्थं भुक्ता चांद्रायणंचरेत् परा
शरः अगम्यागमनेचैव मद्यगोमांसभक्षणे शुद्धैचांद्रायणंकुर्या
न्नदींगत्वासमुद्रगां ॥ १०२॥ चांद्रायणे ततश्चीर्णे कुर्याद्ब्राह्मणभो
जनं अनुडुत्सहितांगांच दद्याद्विप्रेपुदक्षिणां ॥ १०३॥ संवर्तः
वृथाकृसरसंयावपायसापूपशष्कुलीं भुक्तात्रिरात्रंकुर्वीत व्रतमेत
त्समाहितः ॥१०४॥भरद्वाजः पक्षेवा यदिवामासेन यस्याश्नातिवै
द्विजः भुक्तादुरात्मनस्तस्यद्विजश्चांद्रायणं चरेत् ॥ १०५ ॥ मनुः
ब्राह्मणस्य रुतंकृत्वा घ्रातिरघ्रेयमद्ययोः जैन्हंच मैथुनंपुंसिजाति
भ्रंशकरंस्मृतं॥१०६॥मनुः जातिभ्रंशकरंकर्म कृत्वान्यतममिच्छ
या चरेत्सांतपनंकृच्छ्रं प्राजापत्यमनिच्छया॥१९७॥ सप्ताहसाध्य
मिदं खराश्वोष्ट्र मृगेभाना मजाविकवधस्तथा संकरीकरणंज्ञेयं
मीनाहिमहिषस्यच ॥ १०८॥ निंदितेभ्यो धनादानं वाणिज्यंशू
द्रसेवनं अपात्रीकरणंज्ञेयं असत्यस्यचभाषणं ॥ ९ ॥ क्रिमिकी

टवयोहत्या मद्यानुगतभोजन फलैधः कुसुमस्तेयं मधैर्यंचमला
वहं ॥ १० ॥ एतान्येनांसिसर्वाणि यथोक्तानि पृथक् पृथक् यैर्यै
र्व्रतैरपोह्यंते तानिसम्यङ्निबोधत ॥११॥ यमः मलिनीकरणी
येषु मासमश्नीतयावकं कृच्छ्रातिकृच्छ्रमथवा प्राजापत्यमथापि
वा ॥ १२॥ अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति शीतकृच्छ्रे
णवाशुद्धिर्महासांतपनेनवा ॥ १३ ॥ मलिनीकरणीयेषु तप्त
कृच्छ्रं विशोधनं अभ्यासानुबंध तारतम्या पेक्षया सकृदमत्या
प्रत्येककरणे अत्रिः ऋतौनगच्छेद्भार्यांयो सोपिकृच्छ्रंसमाचरेत्
॥ १४ ॥ यमः केतनंकारयित्वातुयोनिपातयतेद्विजः ब्रह्महत्याम
वाप्नोति शूद्रयोनौचजायते ॥ १५ ॥ केतनं निमंत्रणं निपातनं
अतिक्रमः अतिचांद्रायणंकृत्वा तस्मात्पापात्प्रमुच्यते ॥ १६ ॥
नदीसंगमहर्तुश्च कन्याविघ्नकरस्यच समेविषमकर्तुश्च निष्कृति
र्नोपपद्यते ॥ १७ ॥ त्रयाणामपिचैतेषां प्रत्यापत्तिं तुमार्गतां भै
क्ष्येणचव्रतंमासं शुद्ध्यैचांद्रायणंस्मृतं ॥ १८ ॥ बृहस्पतिः अ
निवर्त्यमहायज्ञान्योभुंक्तेप्रत्यहंगृही अनातुरः सतिधने सतुकृ
च्छ्रार्द्धमर्हति ॥ १९ ॥ शंखः प्रेतस्यप्रेतकार्याणि अकृत्वाधन
हारकः वर्णानांयद्वधेप्रोक्तं तद्व्रतंप्रयतश्चरेत् ॥ १२० ॥ आपस्तं
ब : चितिभ्रष्टाप्राजापत्यंचरेत् देशंकालंवयः शक्तिं पापंचावेक्ष्य
यत्नतः प्रायश्चित्तंप्रकल्प्यंस्या द्यत्रनक्तापिनिष्कृतिः ॥ २१ ॥ हा
रीतः यथावयो यथाकालं यथाप्राणंच ब्राह्मणैः प्रायश्चित्तं प्रदा
तव्यं वृद्धानां रोगिणांतथा ॥ २२ ॥ नतेनशुद्धिमाप्नोति येनप्रा
णैर्वियुज्यते आर्तिंवामहतींयाति नचैतद्व्रतमादिशेत् ॥ २३ ॥ त
स्मात्कृच्छ्रं तथाप्यर्द्धं पादंचापिविधानतः ज्ञात्वाबलाबलंकालं
प्रायश्चित्तंविधीयते ॥ २४ ॥ भविष्ये हिंसात्मकानां सर्वेषां की
र्तितानां मनीषिभिः॥प्रायश्चित्तकदंबानां दानंप्रथममिष्यते॥२५

तदसमर्थो व्रतादीनाचरेत् अंगिराः दह्यमानोनुतापेन कृत्वापा
पानिमानवः शोचमानोह्यहोरात्रं प्राणायामैस्तुपूयते ॥ २६ ॥
ध्यानेनसदृशंनास्तिशोधनंपापकर्मणः श्वपाकेष्वपि भुंजानो ध्या
नी नैवतु लिप्यते ॥ २७ ॥ मनुः कृत्वापापानिसंतप्य तस्मात्पा
पात्प्रमुच्यते नैवंकुर्यांपुनरिति निवृत्यापूयतेनरः ॥ २८ ॥
योगियाज्ञवल्क्यः अगम्यागमनास्तेया त्पापे भ्यश्चप्रतिग्र
हात् रहस्याचरितात्पापान्मुच्यते स्नानमाचरन् ॥ २९ ॥
गौतमः हिरण्यं गौर्वासोश्वो भूमितिलाघृतमन्न मितिदेयानि
एतान्येवानादेशे विकल्प्येनक्रियेरन् महाभारते यद्यकार्यशतं
कृत्वा कृतंगंगाभिषेचनं सर्वंदहतिगंगांभस्तूलराशिमिवानलः
॥ ३० ॥ कृत्वापापान्यविज्ञाना भ्रूणहत्यादितत्पुनः निरस्यति
महायज्ञैरथवातीर्थचर्यया ॥ ३१ ॥ देवलः प्रकाशे यत्कृ
तंकिंचि द्विंशभागोरहस्यके त्रिंशद्भागः षष्टिभागः कल्प्योजा
त्याद्यपेक्षया ॥ ३२ ॥ विश्वामित्रः प्रकाशउक्तं यत्किंचिद्विंशोभा
गोरहस्यके त्रिंशद्भागः षष्टिभागः कल्प्योजात्याद्यपेक्षया ॥ ३३ ॥
मनुः विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः उपांशुः स्या च्छ
तगुणः साहस्रो मानसः स्मृतः ॥ ३४ ॥ किंच वत्सालोक प्रवर्ति
त पयः श्रवो गवा मवभृथतुल्यः तेन शालिग्रामं संस्नाप्य तत्पा
ने ऽवभृथ फलं च्यवनः गौणमहापातकादीनि यथा अदंड्येदं
डः युधिपलायनं अदंड्यदंडे राज्ञस्त्रिरात्रं पुरोहितस्य कृच्छ्रं तथा
दंड्योत्सर्गे राज्ञएकरात्रं पुरोहितस्यत्रिरात्रं व्रतंकुर्यात् युद्धेपृष्टंद
त्वा संवत्सरव्रतंकुर्यात् फलप्रद वृक्षच्छेदेचैवं तथा वैश्यस्य मा
नतुलान्यत्वं मांसविक्रयश्च तथा शूद्रस्य सुरापानस्थाने कपि
लाक्षीरपानं ब्राह्मणीगमनं गुरुतल्पसमं यद्यपि गुरुशब्देन पितै
वगृह्यते तथापिशूद्रस्य ब्राह्मणीं मोहाद्गच्छतः शुद्धिमिच्छतः पूर्व

मेव व्रतंदेयं मातायस्माद्धितस्यसेति प्रचेतोवचने मातृत्वातिदे
शात् सपत्नीमातेव ब्राह्मणी शूद्रस्य च्यवनः उभयमुखीं दत्वा
पूतोभवति महापातकात् बृहस्पतिः पतितानांगृहेगत्वा भुक्त्वा
चप्रतिगृह्यच मासोपवासंकुर्वीत चांद्रायणमथापिवा॥ १३५॥
मासोपवासो ज्ञानाभ्यासे चांद्रायणमज्ञानाभ्यासे गत्वेत्यनेन
संवत्सरेणेति अतिपातकान्याह मनुः अनृतंच समुत्कर्षे राजगा
मीचपैशुनं गुरोश्चालीकनिर्बंधः समानिब्रह्महत्यया॥ १३६॥
ब्रह्मोह्यता वेदनिंदा कौटसाक्ष्यंसुहृद्वधःगर्हितानाद्ययोर्जग्धि सु
रापानसमानिषट् निक्षेपस्यापहरणं नराश्वरजतस्यच भूमिव
ज्रमणीनांच रुक्मस्तेयसमंस्मृतं॥ ३७॥ रेतसेके स्वयोन्यासु
कुमारीष्वंत्यजासुच सख्युः पुत्रस्यचस्त्रीषु गुरुतल्पसमंविदुः
॥ ३८॥ स्वैरणी पतिम्हते चतुः पुरुषगामिनी पंचगाबंधकी प्रकी
र्णा येनकेनचि दूवरूढा तादृशीगमने पूर्वमुक्तं याज्ञवल्क्यः नी
चाभिगमनं गर्भपातनं भर्तृहिंसनंविशेष पतनीयानि स्त्रीणा मे
तान्यपिध्रुवं॥ ३९॥ प्रचेताः वंधकीगमने उपस्पृश्य प्राणाया
मं कुर्यात् ब्राह्मणबंधकींगत्वा कमंडलुंदद्यात् क्षत्रियां आयुधं वै
श्या प्रतोदं शुद्रवंधकी विषये स्नानं प्राणायामः एतत्सवर्णा नुलो
म प्रतिलोमसाधारणम् विशेषाश्रवणात् अत्यंताभ्यस्त बंधकी
गमने प्राजापत्यं उशनाः यत्रोक्तं यत्रवानोक्तमिहपातकनाशनं
प्राजापत्येन कृच्छ्रेण शुध्यते नात्रसंशयः॥ ४०॥ वेश्यागमने
प्रायश्चितमाह संवर्तः पशुवेश्याभिगमने प्राजापत्यंविधी
यते तदशक्तौधेनुरेकादेया एतत्सकृद्गमने अभ्यासे चांद्रायणे
न चैकेन सर्वपापक्षयोभवेत् इत्यापस्तंबवचनात् चांद्रायणं आ
जन्मांतोभ्यासे गुरुतल्पवत् पितृस्वसृसुता परिणयन प्राय
श्चितमाहसुमंतुः पितृस्वसृ मातृस्वसृ सुतां मातुलसुतां मातृस

गोत्रां समानार्षेयीं विवाह्य चांद्रायणंचरेत् परित्यज्यैनां बिभृयात् मातृसगोत्रां मातामहस्य सप्तमपुरुषात् यावत् शातातपः परिणीयसगोत्रांतु समानप्रवरांतथा कृत्वा तस्या समुत्सर्गं मतिकृच्छ्रं समाचरेत् पर्वणि मैथुनेस्नात्वा वारुणीभिप्रमार्जयेत् वानप्रस्थ पात्योः कामतोतोरेत्सर्गेचांद्रायणं स्वप्नेतु अघमर्षणत्रयं ब्रह्मचारिणः स्वप्नेरेतस्खलने स्नात्वार्कंसंपूज्य त्रिःपुनर्मामेत्यृचंजपेत् कामतः संवत्सरव्रतंचरेत् नैष्ठिकस्यद्विगुणं भार्यामुखमैथुने कृच्छ्रं गोयुक्तरथयानस्थ मैथुने तदर्द्धं मृगयाद्यूतादि अष्टादशव्यसने तिलेक्ष्वादि यंत्रप्रवर्तने भार्याया वेश्या त्वकरणेन जीवने स्त्री धनोपजीवने वश्योषधिभिर्जीवने वडिपादि विधानरूपे जीवने चांद्रादिष्वेकं त्रैमासिकंवा अत्यंताभ्यासे द्यूते मृगयायां पंचवार्षिकं वेदानाम प्रामाण्याभिधाने विप्रभिन्न मित्रवधे अधीतवेदस्य बौद्धादिशास्त्रावष्टंभेन नाशं प्राणिमात्र वध फलकानृत साक्ष्यं गुणवत्परीक्षायां अनृतवचनं राजकुले ब्राह्मण पीडाजनक पैशुन्यं एतेषुषडब्दं ब्रह्महव्रतं मत्यादे स्त्रीसंगेपुनर्गार्हस्थ्यकरणे च पुनः प्रायश्चित्ताभावएव विष्णुः आरूढंनैष्ठिकंधर्मं ब्रह्मप्रच्यवेतंपुनः प्रायश्चित्तंनपश्यामि येनशुद्ध्येत्सआत्महा ॥ १४२ ॥ नैष्ठिकानां वनस्थानां यतीनांचावकीर्णिनां शुद्धानामपिलोकेस्मिन्प्रत्यापत्तिर्नविद्यते गौतमः समद्विगुणसाहस्त्रं प्रमालक्षंयथाक्रमं दानेफलविशेषः स्याद्धिंसायांतु तथैवहीति ॥ १४३ ॥ दक्षः भूमिकन्यानृतेप्रोक्तं मासंगोमूत्रयावकं अनग्नयश्चयेविप्रा मृतनिर्यातकाश्चये येवापेताः स्वकर्मभ्यस्तेनास्तेपरिकीर्तिताः ॥१४४॥ वार्धुषिकः समर्घं धान्यमादाय महर्घं यः प्रयच्छति सवैवार्धुषिकोनाम हव्यकव्यबहिष्कृतः ॥ ४५ ॥ चतुर्विंशतिमते गायत्र्यास्तुजपेत्कोटिं ब्रह्महत्यांव्यपोहति लक्षाशीतिंजपेद्यस्तु सुरापा

नाद्विमुच्यते ॥ ४६ ॥ पुनातिहेमहर्तारंगायत्र्यालक्षसप्तति:
गायत्र्याषष्टिभिर्लक्ष्यैर्मुच्येतगुरुतल्पगः भारते वर्षाकाले तडागे
तु सलिलंयस्यतिष्ठति अग्निहोत्रफलंतस्य फलमाहुर्मनीषिणः
॥ ४८ ॥ एवंशरत्काले सलिले गोसहस्रफलं हेमंतेसलिले बहु
सुवर्णस्यफलं शिशिरे जलेअग्निष्टोमफलं वसंतेसजले अतिरा
त्रपक्षफलं निदाघेसजले वाजिमेधफलं गावःपिबंति सलिलं सा
धवश्चनराः सदा मृगपक्षिमनुष्याश्च सोश्वमेधफलं लभेत् ॥
१४९ ॥ भूमिदानेहरणेच बृहस्पतिः भारतेइद्रंप्रति दशदातानु
गृह्णाति दशहंतितथाक्षिपन् पूर्वदत्तांहरंभूमिं नरकायोपगच्छति
१५०॥नददातिप्रतिश्रुत्यदत्वापितुहरेत्तुयःसबद्धोवारुणैपाशैःस्त
प्यतेमृत्युशासनात् ॥ ५१ ॥ ब्राह्मणेष्वनृणीभूतः पार्थिवः स्या
त्पुरंदरः इतरेषांतु वर्णानां तारयेत्कृशदुर्बलान् नोच्छिद्या त्कर्शि
तांभूमिं परेणत्रिदशाधिपः ब्राह्मणस्य सुरश्रेष्ठ कृषिवृत्तेः कदा
चन ॥ ५३ ॥ यथाप्सुपतितःशुक्र तैलबिंदुर्विसर्पति तथाभू
मिकृतंदानं सस्येसस्येविवर्द्धते ॥ ५४ ॥ नास्तिभूमिसमंदानं ना
स्तिमातृसमोगुरुः नास्तिसत्यसमो धर्मो नास्तिदानसमोनि
धिः ॥ ५५ ॥ कृत्वातिपातकंकर्म योदद्यादन्नमार्थिने ब्राह्मणायवि
शेषेण नसपापेनलिप्यते ॥ ५६ ॥ पुरुषशुक्तं मासेन षोद्यशक्तु
त्वा जपन् गुरुतल्पादे रपिशुध्येत् एवंपवमान जपाघमर्षण ज
पादयोबोध्याः आहार विशेषानुक्तौ पयः प्रभृतयोबोध्याः पुण्य
देशाः क्षेत्राः कालो माघादयश्च उपनिषदामर्थ ज्ञानायन्याय
शास्त्रंपठन् वेदार्थ ज्ञानतुल्यंफलं केवलंजीविकार्थ पठने हेतुवा
दरतोयोपि शृगालींयोनिं पठिताक्षरवर्षसंख्यया प्राप्नोति ऋ
ग्वेदस्यो पवेदो वैद्यशास्त्रं ब्राह्मणं रोगिणं उपचारेण जीवयितु
र्ब्रह्महत्योद्भव पाप नाशः चतुःशत कृच्छफलपुण्यं क्षत्रिये

त्रिशतकृच्छ्रफलं वैश्येद्विशतकृच्छ्रफलं शूद्रेएकशतकृच्छ्रफलं पूर्वकृततद्धत्यानाशोवा यत्नेकृतेपि नजीवति चेदर्द्धफलं जीवि कार्थकृते इहलोकफलं परलोकेनाकिं चन किंचिन्नास्ति गांधर्वं भक्तियुक्तो विष्णोःपुरोगाने गन्धर्वलोकः जीविकार्थे इहैवफलं पर लोकेनाकिं चन विप्रशुल्कं सतिसंभवे नदद्यात् विष्ठायां कृमिर्भव ति सुवर्णयव संख्यया दिव्यवर्षाणि ज्ञानाद्वा ध्ययनाद्वापि पु ण्यमन्यविधीयते अभक्ष्यभक्षणे स्त्रीसंगे गृहस्थे यद्विशोधनं ततोदशगुणं प्रोक्तं नैष्ठिकब्रह्मचारिणः ततोदशगुणं वनाश्र मे ततोदशगुणं संन्यासिनः प्रायश्चित्तं दुर्भिक्षे आपद्य न्नदाता चतुर्गुणंफलं प्राप्नोति उक्तंचदुर्भिक्षेग्रासमात्रान्नं ग्रीष्मे बिंदुस मंजलं नतुल्यंक्रतुलक्षेण ह्यमेततततोधिकमिति ब्राह्मणस्यतु दुर्भिक्षे प्राणसंकटेतद्धर्महानिः दाताजीवनफलंलभते अनाप दि भोक्तु धर्महानि र्द्रव्यलोभतः अथवाबांधवानां सौहार्द्या द्यो निसंबंधाद्वा भोजनेनदोषः उक्तंच वाराहे पितुर्भ्रातुः पितृव्या देः सपिंडस्यगुरोरपि दौहित्रश्वशुरादीनां स्वस्त्रोसंबंधिना मपि मातामहस्य तत्सूनो र्मातृस्वस्त्रादिकस्यच यद्याप्रीत्या न्नमश्नाति परान्नंदोषकृन्नहि स्वकीयान्सुहृदोहित्वा योग्यानु त्सवमाचरेत् दैविकं पैत्रिकंचापि तस्यपुण्यक्षयोभवेत्आमान्नं गृहीत्वा स्वगृहे पक्तुःपादं द्वितीयेन्हि अष्टमांशं तृतीयेह्नि षोडशांशं चतुर्थे द्वात्रिंशांशं प्रतिग्रह विप्रान्ने एतत् क्षत्रियान्ने द्विगुणं वैश्यान्ने त्रिगुणं शूद्रान्ने चतुर्गुणं संकराद्ग्रहणे यावत्स्व कीयंदत्वा शुद्धिः महापद्यपि जीवितुं गृह्णाति तदप्यर्धंदत्वा वि प्राय शेषेणात्मपोषणं यथावृत्याजीवनं ब्राह्मणस्यदाने प्रतिग्र हेच साजातिः अमायांविप्रभोजने शतविप्रभोजनफलं प्रे तपक्षीयदर्शेतु द्वादशगुणंपुण्यं प्रायश्चित्तंच भोक्तुः प्रवासिनो

ऽद्धं नवश्राद्धे पाथेयेनग्नप्रच्छादने ऽस्थिसंचयने पराकत्रयं आमश्राद्धे चांद्रायणं मासिके प्राजापत्यत्रयं सापिंडीकरणे प्राजापत्यचतुष्टयं पार्वणे मासिके प्राजापत्यं प्रथमाब्दिकेभुक्त्वा उपवासत्रयं प्रत्याब्दिके एकोपवासः गायत्र्यासहस्त्रजपोवा मासं परान्नाशिना प्राजापत्यमिष्टं भक्त्यादत्तंचेत् राहूपरागे भुंक्ते प राकः प्रायश्चित्तं अवटश्राद्धेपि वैधृतिव्यतिपात षडशीतिमुखे विष्णुपदेभुंक्ते एकाहमुपवासः मन्वादौ युगादौ प्रेतपक्षे नैमित्ति के श्राद्धे गायत्र्याद्विशतंजपेत् अयने विषुवे भुंजानस्य गायत्र्या अयुतंजपः अथवाउपवासद्वयं चातुर्मास्ये दशगुणं पुण्येवापाप एववा पलांडुं श्वेतलशुनं श्वेतवृंताकं छत्राकं गृंजनं मतिपूर्वम शित्वा द्विजोपुनः संस्कारमर्हति महापापंविना सर्वंकामतो वा प्यकामतः कृतंपापंविनश्येत् पश्चात्तापादिनासखे आरामरोपणा त्सर्वं निष्कामेनयदाकृतं ॥ १ ॥ ब्रह्महामद्यपस्तेनो गुरुद्वेष्टास दानृती मुच्यतेपातकैः सर्वैं र्द्वादशीयै रुपोषिता ॥ २ ॥ कुलानां चशतंसाग्रं अनाचाररतंसदा आत्मनासहसन्नीतं वासुदेवस्यमं दिरं ॥ ३ ॥ यथोक्तंसुकृतंयस्तु विधिवत्कुरुतेनरः ॥ स्वल्पंमुनि वरश्रेष्ठ मेरुतुल्यंभवेत्फलं ॥ ४ ॥ विधिहीनंतुयः कुर्या त्सुकृतंमेरु मात्रकं अणुमात्रंनचाप्नोति फलंधर्मस्यनारदः ॥ ५ ॥ ब्रह्मवैवर्त्ते संध्याहीने व्रतभ्रष्टे नास्तिके हैतुकेशठे नैतेषां तिष्ठतेदेहे धर्मशा स्त्रविदूषके परदाररते मूर्खे कृतघ्नेवंचकेतथा धर्मोनतिष्ठतेदेहे ए तेषामपिदेहिनां ॥ ७ ॥ आचार भ्रष्टदेहानां वृषलीगामिनांस्तु त यत्नेनसेव्यमानोपि धर्मस्तेषांपरांमुखः ॥ ८ ॥ येषांयेषांतुपा पानां प्रायश्चित्तंनविद्यते तानितानिविनश्यंति गंगाबिंदोस्तुस्प र्शतः ॥ ९ ॥ पापिनां धर्मिणांवासु संसर्गाद्दशमासिकं भोजनादेक पंक्तौच विंशांशः पुण्यपापयोः यः कर्माणिपरित्यज्य भक्तिमात्रेण

जीवति नतस्यतुष्यते विष्णुराचारात्तुष्यतेयतः तस्मात्कुर्याद्ध-
रौभक्तिंस्वधर्मस्याविरोधिनीं सदाचारविहीनानां धर्मार्थौनसु
खप्रदौ॥ १२ ॥ यथाचारपरित्यागी प्रायश्चित्तीभवेद्ध्रुवं वर्णा
श्रमाचाररताः सर्वपापविमोचिताः नारायणपरायांति तद्विष्णोः
परमंपदं वक्तापुरुषवाक्यानां मंतव्योनरकागतः संदेहोन विशां
श्रेष्ठ पुनर्यास्यतिदुर्गतिं व्रतंदानं तपोयज्ञा पवित्राणांतराणिच
गंगाविंद्वभिषेकस्य नसमानीतिविश्रुतं दिवसेदिवसेवैश्य प्राणा
यामास्तुषोडश अपिभ्रूणहतांपुंसां पुनंत्यहरहः कृताः॥ १६ ॥ गं
गांभोपि कुशाग्रेण मासमेकंतुयः पिबेत् संवत्सरंशतंसाग्रं प्राणा
यामस्तुतत्समः॥१७॥पातकंतु महच्चव्च तथाक्षुद्रोपपातकंप्राणा
यामैःक्षणात्सर्वं भस्मसाच्चविशांवर दानमयूखे चण्डालोजायतेय
ज्ञकरणाच्छूद्रभिक्षितात् यज्ञार्थलब्धमपिद्वाषः काकोपिवाभवेत्
॥१९॥ पात्रे उग्रंकृतं चेदानंत्यं यथाहेमकांतो राजामृगयावृत्तिः
त्रितंमूर्छितं आतपक्लांतं दृष्ट्वा पलाशपत्रैः छत्रंकृत्वा शिरसिच
कार अलाबुस्थं जलंददौ मुनिर्लब्धसंज्ञोग्रामं आगत्य आप्याय
तेंद्रियःतेनपुण्येन नृपस्यब्रह्महत्या शतत्रयंनाशः पुण्यंपापंवा भुं
जन्मध्येतदेवपुनः प्रतिरूपंकुर्याच्चेत्तस्य सर्वस्यनाशः यथापापं
भुंजन् मध्येउग्रे पुण्येकृते जातेवासर्वस्यपापस्यनाशो भुज्यमान
स्यापि प्रारब्धस्यापिनाशः एवं पुण्यंभुंजन् मध्ये तत्पुण्योपक
रणैरेव पापंकृतंचे त्तत्पुण्यस्य सर्वस्य प्रारब्धस्यनाशः उग्रे
पापे पुण्येचकृते सति वज्रलेपं पुण्यं तु अपरमपि फलंददाति
शुभं एवंपापमपि धर्मानुष्ठातुरपिमध्ये विशेषधर्मानादरेतत्काले
मृते नरकः धर्मान्परित्यज्य विशेषधर्मादरेतत्काले मृतेमोक्षः अ
न्यथा कालांतरे तत्फलमुदेति निवृत्तिमार्गे रतिर्भवति महदप्य
ल्पफलदं कर्मह्यल्पापिभूरिदं कर्मणोभूरिहेतुत्वेन हेतू महदल्पके

किंतुकर्मस्वरूपंच गहनाकर्मणोगतिः विशेषधर्मानुष्ठाने यमलि
पिमार्जनंचभवति उग्रकर्म आकुलं फलं ददाति पुण्यंवा पापंवा
संबंधंयावत्फलं ददाति त्रिःसप्तकुलंफलंददाति यज्ञदान स्तपः
स्तीर्थ व्रतादिभ्यो उग्रस्यधर्मस्याधिक्य मितिभावः सद्गुणेषुक्त
तस्तापः सतापोमरणांतिकः कथादिश्रवणादंतःकरणशुद्धिः स
र्वतोधिकाश्रुत्वाधर्मंविजानाति श्रुत्वापापान्निवर्त्तते श्रुत्वानिवर्त्त
तेमोहात्श्रुत्वाज्ञानामृतंलभेत्साधूनांतिरस्कारात् शत्रुभिःपराज
यःकदाप्यदत्त दोषेण दारिद्र्यं सर्वेषामप्रियत्वाद्दुःखमत्यंतदुः
सहं एतेसर्वे विशेषधर्मानुष्ठाना न्नष्टाभवंति प्रारब्धनाशःप्रारब्ध
तकर्म भागनाश इत्यर्थः पद्मपुराणे चौर्येणैव स्वधर्मेण यद्गृहीतं
वनांतरे तदीयमेवतत्सर्वं व्याधानांधर्मनिर्णयः ॥ १ ॥ कश्चिद्
व्याधोजीर्णे उपानहौ स्वकीयौ शंखमुनयेददौ तदीयं नवंतुगृही
तं परंतु व्याधस्य चौर्यधर्मत्वात् तस्यैवेति उभेउपानहौ इतिनि
र्णयः वर्णांतरेतु यदीयं हत्वा पुण्यंकरोति तदीयमेव पुण्यंहर्तुः पा
पमेवे तिनिर्णयः निर्णयान्तरं पुत्रंचधर्मविमुखं भार्यांचाप्रियवा
दिनीं अब्रह्मण्यंचराजानं त्यजेत्सद्योनचेत्पतेत् ॥ १॥ दाक्षिण्या
दर्थलोभाद्वा संसर्गंयेप्रकुर्वते तेसर्वेनरकंयांतियावदिंद्राश्चतुर्दश
॥ २ ॥ कोभार्यांप्रणतांवायो नानुमन्येतगर्हितः सषंडोभविताभ
द्रे दशजन्मसुपंचसु ॥ ३ ॥ पद्मपुराणे तस्मात्प्राणंवरंप्राहुः प्रा
णोपासनतत्पराःलीलयैवजगत्स्रष्टुं हंतुंपालयितुंप्रभुः ४॥शेषाहि
शिवशक्राद्या श्चेतनाश्चजडाअपिवासुदेवादृतेकोपि नैनंपरिभवि
ष्यति ॥५॥ सर्वदेवात्मकः प्राणः सर्वदेवमयोविभुः वासुदेवानुगो
नित्यं तथाविष्णुवशेस्थितः वासुदेवप्रतीपंतु नशृणोतिनपश्यति
देवाःप्रतीपं कुर्वंति रुद्रेंद्राद्याः सुरेस्वराः ॥ ७ ॥ प्रतीपंकापिकु
रुते नप्राणः सर्गगोचरः तस्मात्प्राणोमहाविष्णोर्बलमाहुर्मनी

षिणः ॥ ८॥ एवंज्ञात्वा महाविष्णो र्माहात्म्यंलक्षणंतथा पूर्वंवं धानुगंलिंगं जीर्णांत्वचमिवोरगः विसृज्ययातितत्सर्वं नारायण मनामयं अवज्ञा साधुवृत्ताना मिहामुत्रच दुःखदा ॥ १० ॥ तस्माद्ज्ञानीमहापूज्यः पूज्यात्पूज्यतरः स्मृतः सेवावैमहतांपुंसां पुमर्थानांहिकारणं कर्मणांतारतम्यं यथा इक्ष्वाकुवंशे हेमांगराज्ञो अनंतदानैः सर्वयज्ञदान तपोभि रपिजलादानान्नोर्ध्वगतिः तथासंकृति गोत्रे मैत्राख्य द्विजस्य यज्ञदानतपोनिष्ठस्य नानाविद्या दातुश्च अन्नदानाभावेपि साच ताःसर्वतीर्थस्नातुरपि वैशाखे अन्नानि तेनसतामुपदेशे पि जलदानं चनकृतं हेमांगेन उग्रं यथाभवति वेधासृष्ट्यादौहेतुत्रयं ऐहलौकिकं पारलौकिकं अकल्पयत् ऐहिके अन्नजल औषधिसेवनं पारलौकिके साधुसेवनं विष्णुसेवा धर्मपथमेवच ॥ १ ॥ त्रिविधाजीवाः स्वसत्वानुरूपंकर्मकुर्वंति कचिच्चगुणवैषम्यं एतेषांसंसृतौभवेत् तेनोच्चावचं कर्मकुर्वंतः फलभागिनः ॥ २ ॥ कचित्सुखं कचिद्दुःखं कचिन्नो भयमेवच गुणानामेववैषम्यात् प्राप्नुवंतिनराइमे ॥ ३ ॥ प्रकृतिस्थाइमेजीवा बद्धाएतैस्त्रिभिर्गुणैः गुणकर्मानुरूपेण कर्मणोन्यत्ययः फलं ॥ ४ ॥ गुणानुगुण्यंभूयस्ते प्रकृतिंयातिवैप्रजाः अटनंसर्वतीर्थेषु वीक्षणंसर्वकर्मणां श्रवणंसर्वधर्माणां विषयासक्तचेतसां अकिंचित् करमेतेषां षंडस्येववरस्त्रियः ॥ ६ ॥ निषिद्ध भक्षणे तिर्यक् योनिशतं चांडालश्चभवति चांद्रायण प्रायश्चित्तोक्तानां अलाबुंगृंजनं चैव लशुनं तिलपिष्टकं कांजिकं शिग्रुकूष्मांडं शणं कौशुंभ मूलिकां वृंताकंच कलिंजानि कोद्रनिष्पावकास्तथा बिल्वोदुंबरकंचैव कुलत्थंच मसूरिका षाष्टिकंवर्जनीयंस्या त्तथावर्ज्याविभीतकाः एषांभक्षणे द्विजस्य चांद्रायणं क्षत्रियस्यपादोनं वैश्यस्यार्द्धं एकादश्युपवासे प्राजापत्यदशकं

अन्यथा दशप्राजापत्यप्रायश्चितं प्रत्याम्नायस्तु दशगोदानं ल
क्षमेकंनतिर्वा अपनुत्य ऋणंयस्तु परस्यम्रियतेनरः धनीतत्पुण्य
माप्नोति स्वधनस्यानुरूपतः अकामात्पातकं शुष्कं कामादार्द्र
मुदाहृतं आर्द्रशुष्कादिभिः पापैर्द्विप्रकारानवस्थितान् ॥ २ ॥
ज्ञानपूर्वंकृतंकर्म अजन्मानंचतत्फलं स्कंदपुराणे कृतंशास्त्रोक्त वि
धिनाकर्मचे त्सुकृतंनरैः पापस्यमहतोपिस्यात् क्षयोनैवात्रसंश
यः कृत्वापादोदकंशंखे वैष्णवोभक्तितत्परः यआचमेत्तिलोन्मिश्रं
चांद्रायणफलंलभेत् नाद्यं तडाकजंचापि वापीकूपोद्भवंतथागांगेयं
जायतेसर्वं जलंशंखेकृतंमुने॥५॥त्रैलोक्येयानितीर्थानिपवित्राणी
हभूतले शंखेतानिवसंतीह तस्मात्शंखोवरःस्मृतः तावद्गर्जंतिपु
ष्पाणि मालत्यादीनियानिच यावन्नप्राप्यते पुण्या तुलसीहरिवल्ल
भा तुलसीरोपणंयेतु कुर्वंतिमनुजेश्वराः तेकोटिपुरुषैः सार्द्धं हरि
लोकनिवासिनःतृणानि तुलसीमूला द्यावंत्युपहृतानिवै तावंतिब्र
ह्महत्यानां छिन्नान्येवनसंशयः॥ ९ ॥ प्राकारकल्पतोयस्तु तुल
स्यामनुजेश्वरः कुलत्रयेणसहितो विष्णोः सारूप्यतांव्रजेत् तुल
सीं सिंचयेद्यस्तु चुलुकोदकमात्रकं क्षीरोद शायिना सार्द्धंवसत्या
चंद्रतारकं अन्यश्रेयोविघातार्थं येर्चयंतिजनार्दनं सापूजासुमहा
भागा पूजकान्नाशुहंतिवै हरिपूजापरोयस्तु तत्रपापंकरोत्यसौ त
मेवविष्णुद्वेष्टारं प्राहुस्तत्रार्थकोविदाः ॥ १३ ॥ येविष्णुनिरताः
शांता लोकानुग्रहकारकाः सर्वभूतेदयायुक्ता विष्णुरूपाप्रकीर्ति
ताः कोटिजन्मार्जितैः पुण्यैः विष्णुभक्तिः प्रजायते दृढंबुद्धिमतां
विष्णौ पापबुद्धिः कथंभवेत् हविष्यभोजनंनृणा मुपवाससमंविदुः
भुंजंश्चतुर्थकालेच ब्रह्महत्यांव्यपोहति नधर्मानुद्धरेच्छूद्रो नपिबे
त्कपिलापयः मध्यपत्रेनभुंजीत ब्रह्मपत्रस्यभूपते॥ १७॥ नोच्चरे
त्प्रणवंमंत्रं पुरोडाशं नभक्षयेत् नाशनंनोपवीतंच नाचरेद्वैदिकीं

क्रियां ॥ १८ ॥ निषिद्धाचरणं कुर्वन् पितृभिः सहमज्जति पतंति
नरकेघोरे यावदिंद्राचतुर्दश पश्चाच्चकुक्कुटांयोनिं सुकरींवानरींच
वा एतस्मा त्कारणात्शूद्रः प्रणवंवर्जयेत्सदा नमस्कारेणविप्राणां
शूद्रोनश्यतिभूमिपः व्रतवैकल्प्य मासाद्य ह्यंधः कुष्ठीचजायते
॥ २१ ॥ भर्त्तारंवै परित्यज्य मिष्टमश्नातिकेवलं उलूकीजायते क्रू
रा वृक्षकोटरशायिनी उक्ता प्रत्युत्तरंदद्या न्नारीक्रोधेनतत्परा सर
माजायतेग्रामे शृगालीनिर्जलेवने ॥ २३ ॥ सुमंतुः जप स्तप स्ती
र्थयात्रा प्रव्रज्यामंत्रसाधनं देवताराधनंचेति स्त्रीशूद्रपतनानि
षट् विप्रसेवैवशूद्रस्य विशिष्टंधर्मलक्षणं पततोन्यद्धिकुरुते तद्भव
त्यस्यनिष्फलं भारते शूद्रस्तुद्विजशुश्रूषा विरुद्धंधर्ममाचरन् नर
केमुच्यतेतद्वद्वेदश्रवणकीर्तनात् शातातपोपि निरंतरंतीर्थसेवा
संन्यासो मंत्रसाधनं देवताराधनंध्यानं तेषांपापवहंपरं गारुडेद्
शकूपसमावापी दशवापीसमंसरः दशानांसरसांतुल्या प्रपा
स्यान्निर्जलेस्थले योवापींनिर्जलेकुर्याद्योदद्यान्निर्द्धनेद्विजे प्राणि
नांयोदयांधत्ते सस्यान्नाकस्यनायकः ॥ २५ ॥ धर्मकार्यं प
तन् भक्त्यानोचेत्प्राप्नोतिमानवः प्राप्तोभवतितत्पुण्य मत्रमेना
स्तिसंशयः मनसाचिंतयन्पापं कर्मणानातिरोचनम् नप्रा
प्नोतिफलंतस्येत्येवंधर्मविदोविदुः अतिवादोतिमानश्च तथा
त्यागोनराधिपः क्रोधश्चासद्विधित्साच मित्रद्रोहश्चतानिषट् ॥
३२ ॥ एतेएवासतःस्तीक्ष्णाः कृंतंत्यायूंषिदेहिनां एतानिमानवा
न्हंति नमृत्युर्भद्रमस्तुते ॥ ३३ ॥ असूयैकपदंमृत्यु रतिवादः
श्रियोवधः प्रायःपापंविजानीयात् चित्तंतस्यविशोधनं भिक्षुश्चे
द्योहिरागेण हेमंपश्यतिमूढधीः सब्रह्महाभवेत्तद्वत् तंस्पृष्ट्वापौष्क
सोभवेत् हिरण्यसंग्रहीभिक्षुर्भवेदेवात्महातथा आत्महाचातिपा
पीति प्रसिद्धंलोकवेदयोः ब्रह्मनारदसंवादे भिक्षयाहृतमन्नाद्यं स

मश्नीयाद्यतिःसदा मेदोवृद्धिंनकुर्वीत कुर्याच्चप्राणधारणं॥३७॥ त्यजेद्रुधिरवच्चाज्यं एकस्यान्नंचमांसवत् चंदनादिप्रलेपंतु विष्टा लेपमिवत्यजेत् केवलंलवणंभिक्षु रंत्यजवत्परित्यजेत् स्त्रीसंगमि वचाभ्यंगं वस्त्रंचोच्छिष्टपात्रवत् मूत्रवच्चपरित्याज्यं भिक्षुणोष्णो दकंसदा मलवच्चतनोःस्पर्शं वर्जयेदात्मवान्यतिः देशोज्ञातचर स्त्याज्यः चांडालगृहवीथिवत् नारीश्वाहिरिवत्याज्या भिक्षुणा स्वहितार्थिना क्षेत्रंगावो हिरण्यंच यतेर्यस्यपरिग्रहः तादृशंक लमषंदृष्ट्वा सचैलोजलमाविशेत् ॥ ४२ ॥ त्र्येकदंडकषायाणिन्या सलिंगानियानिवै तेष्वधिकृतिमाहुस्म विप्रस्याश्रुतयस्फुटं निर्वे दंब्राह्मणोयायात्प्रव्रजेद्ब्राह्मणोगृहात् व्युत्थायब्राह्मणा भिक्षा चर्यमित्यादिकाः किल क्षत्रियादित्रयाणांतु नास्तिलिंगाधिकारि ता स्मृतयश्चतथाप्राहुःलिंगेविप्राधिकारिता ॥ ४५॥ अत्रिस्मृ तिः काषायं ब्राह्मणस्योक्तं नान्यद्वर्णस्यकस्यचित् मोक्षाश्रमेस दाप्रोक्तं धातुरक्तंतुयोगिनां ॥ ४६ ॥ विष्णुस्मृतौ मुखजानामयं धर्मो वैष्णवंलिंगधारणं बाहुजातोरुजातानां नायंधर्मोविधीयते ॥ ४७ ॥ याज्ञवल्क्यस्मृतौ चत्वारोब्राह्मणस्योक्ता आश्रमाःश्रु तिचोदिताः क्षत्रियस्यत्रयःप्रोक्ताःद्वावेकोवैश्यशूद्रयोः ॥ ४८ ॥ मनुः अलिंगीलिंगवेषेण योवृत्तिमुपजीवति सलिंगिनांहरत्येन स्तिर्यक्योनौचजायते ॥ ४९ ॥ अंगिराःनतीर्थसेवीचात्य तोनोपवासपरोयतिः नचाध्यापनशीलः स्यान्नव्याख्यानपरो भवेत् ॥ ५० ॥ प्रतिग्रहंनगृह्णीयात् नचैवान्यंप्रदापयेत् प्रे रयेद्वा तथाभिक्षु नस्वप्नेपिकथंचन ऋतुः दासी दासं गृहं पा नं गोभूधान्यं धनंरसान् प्रतिगृह्णयति ग्रामं हन्यात्कुलशत त्रयं आविकं पट्टकं वासस्तुलिकां मंचकं मधु शुक्लवस्त्रंचपा नंच तांबूलंस्त्रियमेवच प्रतिगृह्यकुलंहन्यात् प्रतिगृह्णाति

यस्यच अंगिराः क्षेत्रंगावो हिरण्यंच यतेर्यस्यपरिग्रहः तादृशंक
ल्मषंदृष्ट्वा सचैलोजलमाविशेत् ॥ ५२ ॥ यतीनांकांचनंदत्वा तां
बूलंब्रह्मचारिणां चौराणामभयंदत्वा दातापिनरकंव्रजेत् ॥ ५३ ॥
एकान्नाशी कांस्यभोजी भेषजी यस्तुसंग्रही चत्वारोनरकंयांति
मनुःस्वायंभुवोब्रवीत् अजिह्वः खंडकः पंगुरंधो बधिरएवच मुग्ध
श्चमुच्यतेभिक्षुः षड्भिरेतैर्नसंशयः अस्यार्थः अजिह्वः गुणदोषक
थनेभोजनादौ खंडकः बालवृद्ध युवतिषु निर्विकारः पंगुः भिक्षार्थं
मलमूत्रकरणार्थं चाटनं नान्यत्र अंधः तिष्ठन्व्रजन् वापि चतुर्यु
गभूमि मितचक्षुः प्रियाप्रियेश्रुत्वा निर्विकारो बधिरः मुग्धस्तु
विषय सांनिध्ये सुप्तवत् योस्ति क्रतुः बीजघ्नं तैजसं पात्रं शुक्रोत्स
र्गं सितावरं निशान्नंच दिवास्वप्नं यतीनांपतनानिषट् ॥ ५६ ॥
मेधातिथिः भिक्षाटनं तपोध्यानं स्नानं शौचंसुरार्चनं कर्त्तव्या
निषडेतानि यतीनांनृपदंडवत् ॥ ५७ ॥ व्यासः पक्कंहि तुलसी
पत्रं शुष्कंपर्युषितंचयत् आनीयतत्प्रयत्नेन पूजयेत्पुरुषोत्तमं ५८
शौनकः ज्ञानंमहेश्वरादिच्छे न्मोक्षमिच्छेज्जनार्दनात् प्रणमे
द्दंडवद्भूमौ नमस्कारेणचार्चयेत् यमः अष्टौग्रासायतेः प्रोक्ताः षो
डशारण्यवासिनः द्वात्रिंशत्तु गृहस्थानां यथेष्टंब्रह्मचारिणः॥६०॥
व्याघ्रः चतुरंगुलमुत्सेधं चतुरंगुलमायतं एतद्ग्रासप्रमाणंतु व्या
घ्रेणपरिभाषितं भक्त्या भक्त्योपभुंजीत नियमार्थंयतिरात्मवान्
याज्ञवल्क्यः उच्चैर्जपादुपांशुश्च सहस्रगुणउच्यते मानसश्चतथो
पांशोः सहस्रगुणउच्यते ॥ ६२ ॥ संप्रदायविदः यस्तु द्वादशसा
हस्रं नित्यं प्रणवमभ्यसेत् तस्यद्वादशमासैस्तु परब्रह्मप्रकाशते
अंगिराः आरूढपतितोहंति दशपूर्वान्दशापरान् निस्तारयतिता
नेव योहिसम्यग्व्यवस्थितः यमः कण पिण्याक तक्रंवा शाकमू
लफलादिकं पक्कंवा प्यथवाऽपक्कं पचन्नऽज्ञानतोयतिः आचरेत् त्री

णिकृच्छ्राणि प्राकृतान्येवशुद्धये अभ्यासाद्बुद्धिपूर्वंहि पाकदोषान्न मुच्यते ॥ ६६ ॥ देवलः रेतःसेकंकचिद्भिक्षुः कुर्यान्मोहात्तुकाम तः प्राजापत्यत्रयंकृत्वा प्राणायामशतंचरेत् दत्तात्रेयः उपेत्यतु स्त्रियंकामा त्प्रायश्चित्तंविधीयते प्राणायामसमायुक्तः कृच्छ्रम ब्दंसमाचरेत् तथैवचपुनःश्रांतः कुर्याच्चतपनंव्रतं ततश्चरितनिर्दे शा त्कृच्छ्रस्यांतेसमाहितः पुनश्चाश्रममागत्य चरेद्भिक्षुः समा हितः इच्छयायदितांपश्ये त्प्राणायामास्तुषोडश ७ विष्णुः नैष्ठि कानांवनस्थानां यतीनाम वकीर्णिनां शुद्धानामपिलोकेस्मि न्प्रा ज्यापत्यंविधीयते ॥७१॥ अत्रिः वर्षाभेदंयतिंकुर्या द्यदिकश्चिद नापदि प्राजापत्येनकृच्छ्रेण मुच्यतेनात्रसंशयः ॥ ७२ ॥ स्थिति योग्यान्बहून्ग्रामान् यदिवर्षासुलंघयेत् प्रत्येकैकंचरेत्कृच्छ्र मेत त्पापापनुत्तये ॥ ७३ ॥ वृद्धशातातपः निगृहीतेंद्रियग्रामो यत्र यत्रवसेद्यतिः तत्रतत्रकुरुक्षेत्रं नैमिषंपुष्करंतथा ॥ ७४ ॥ दत्ता त्रेयः क्षौरंमेढ्रप्रदेशेतु कृत्वाकृच्छ्रंसमाचरेत् प्राणायामशतंकृत्वा तस्माद्भिक्षुर्विशुध्यति ॥७५॥ यमः भिक्षुर्द्विर्भोजनंकुर्या त्कदा चिज्ज्ञानदुर्बलः स्वस्थावस्थोयदालौल्यात्तदाचांद्रायणंचरेत् ७६ जाबालः यत्यन्नंयतिपात्रस्थं यतिनाप्रेरितंचयत् अन्नत्रयंनभोक्त व्यं भुक्त्वाचांद्रायणंचरेत् संन्यासंकुरुतेयस्तु श्राद्धंतस्यविधीयते तस्यान्नंनैवभोक्तव्यं भुक्त्वाचांद्रायणंचरेत् ॥७८॥ यमः ज्ञानेनमु च्यतेभिक्षुस्तपसास्वर्गमाप्नुयात् नरकंविषयासंगान्त्रयोमार्गा स्तपस्विनां ॥ ७९ ॥ जमदग्निः उद्धृत्यवामहस्तेन भाजनंयोन्न मत्तिवै गृध्रोच्छिष्टंचविज्ञेयं भुक्त्वाचांद्रायणंचरेत् ॥ ८० ॥ यमः उद्धृत्यवामहस्तेन यःपिबेद्ब्राह्मणोजलं सुरापानेनतत्तुल्यं मनुः स्वायंभुवोब्रवीत् ॥ ८१ ॥ अंगिरसः षष्टिकुला न्यतीतानि षष्टि आगामिकानिच कुलान्युद्धरतेप्राज्ञः संन्यस्तमितियोवदेत् ८३॥

पाराशरः अन्नदोषेणचित्तस्य कालुष्यंसर्वदाभवेत् कलुषाकृष्टचि
त्तानांधर्मःसम्यग्नभासते ॥ ८४ ॥ दुष्कृतंनिखिलंनॄणामन्नाधा
रेऽव्यवस्थितं तस्यपरिग्रहंकुर्या न्नापरीक्ष्यकदाचन याज्ञवल्क्यः
कर्त्तव्याशयशुद्धिस्तु भिक्षुकेणविशेषतःज्ञानोत्पत्तिनिमित्तत्वा
त्स्वातंत्र्यकरणायच ॥ ८५ ॥ मनुः राजान्नंतेजआदत्ते शूद्रान्नंब्र
ह्मवर्चसं आयुर्हिस्वर्णकारान्नं यशश्चर्माविकर्तिनः ॥ ८६ ॥ कारु
कान्नंप्रजांहंति बलंनिर्णेजकस्यच गणान्नंगणिकान्नंचलोकेभ्यः
परिकृंतति ॥ ८७ ॥ पूयंचिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिंद्रियं
विष्ठावार्द्धुषिकस्यान्नं सन्नविक्रयिणोमलं नराज्ञःप्रतिगृह्णीयाद
राजन्यप्रसूतितः सूनाचक्रध्वजवतां वेशेनैवचजीवतां ॥ ८९ ॥
दशसूनासमंचक्रं दशचक्रसमोध्वजः दशध्वजसमावेश्या दशवे
श्यासमोनृपः दशसूनासहस्राणि योवाहयतिसौनिकः तेनतुल्यः
स्मृतोराजा घोरस्तस्यप्रतिग्रहः ॥ ९१ ॥ भारते दीक्षितस्यक
दर्यस्य क्रतुविक्रयिकस्यच तक्ष्णश्चर्मविकर्त्तुश्च पुंश्चल्यारजक
स्यच ॥ ९२ ॥ वामहस्तादृतंचान्नं भुक्तंपर्युषितंचयत् सुरानुग
तमुच्छिष्ट मभोज्यं शोषितंचयत् ॥ ९३ ॥ समानमेकपक्त्यांतु
भोज्यमन्नंनरेश्वर विषंहालाहलंभुंक्ते योप्रदायसुहृज्जने ॥ ९४ ॥ म
नुः यएतेत्वभोज्यान्नाः क्रमशः परिकीर्त्तिताः तेषांत्वगस्थि
रोमाणि वदंत्यन्नंमनीषिणः ॥ ९५ ॥ एतत्सर्वंप्रकरणस्य तात्पर्यं
माहपुरंजनोपाख्यानवत् वेदाब्रह्मात्मविषया त्रिकांडविषयाइमे
परोक्षवादाऋषयः परोक्षंममचप्रियं इतिभगवद्वचनानुसारेणो
च्यतेकिंचित् देवशर्माद्विजोभार्यां सुशीलामवदत्प्रियःसंमार्जनो
पलेपाभ्यां कृत्वाशुद्धं हरेर्गृहं ॥ १ ॥ नायोग्यः प्रविशेदंत स्तथा
लीनंव्रजेद्बहिः स्थिराभवेद्द्वारदेशे पूजयिष्यामिकेशवं ॥ २ ॥ अयं
मनो बुद्धिसंवादः देवइति सात्विका हंकारादपंचीकृतादुत्पन्ना

देवामनश्च समानोत्पत्तित्वाद्देवशब्देन मनोगृह्यते शर्मशब्देन श्रेष्ठत्वं सर्वेंद्रिया पेक्षयासच द्विजःद्वाभ्यांजातत्वात् आहारेण का म्यादि निषिद्धादि कर्मणाचमलिनः सच सुशीलां तदाख्यां कथा पक्षे उपदेशपक्षे सात्विकीं बुद्धिः रहःहृदिवदति अयमत्रसमाधिः यथागृहे चतुष्कोणेचत्वारि तिष्ठंति एवंहृदये चतुष्कोणसदृशे मनोबुद्धिचित्ताहंकारास्तिष्ठंति चत्वार स्तत्र मनो द्विजस्थानीयं प्रथमकोणे बुद्धिस्तु तद्भार्यास्थानीया द्वितीयकोणे चित्तस्तुदीप स्थानीयस्तदंतरे ईश्वरश्चेति तृतीयकोणेस्ति अहंकारश्चतुर्थकोणे संमार्जनयोग्यःसंमार्जितश्च चतुर्थकोणे तिष्ठति तदर्थं मनोबुद्धिं वदति एतस्यागंतुकाभेदा रागादय संमार्जनीया शुनि त्रयिस्था नंसंमार्जयित्वा उपविशति रहः हृदिवदति ईश्वरः सर्वभूतानां हृ देशेर्जुनतिष्ठति भ्रामयन्सर्वभूतानी त्युक्तरीत्याहरेर्गृहं हृदयंतत्र संमार्जनं काम्यकर्मनिषिद्धकर्मणा मपाकरणं तथादुष्टान्नस्य दश विधस्य भक्षणंतद्वर्जनं संमार्जनं उपलेपनंतु विहितानुष्ठानं हरिभ क्तिश्च कर्तव्यं तदनंतरं तत्रकाम्यनिषिद्ध कर्मणांप्रवेशः तथादे शदुष्ट १ कालदुष्ट २ स्वभावदुष्ट ३ स्वरूपदुष्ट ४ जातिदुष्ट ५ संबंधदुष्ट ६ भावदुष्ट ७ नामदुष्ट ८ क्रियादुष्ट ९ संसर्गदुष्टे १० त्यादिदशविधान्नस्य प्रवेशोनकार्यः तथालीर्नव्रजेद्बहिः आलीश ब्देन बुद्धिसख्यो दशेंद्रियाणि तानिबहिर्गमना द्रोद्धव्यानि त थाविषयाश्चांतः प्रवेशाद्रोद्धव्याः बलात्कारेण विषयागमनंचेत् निरहंकारेणभोग्यं निद्रादिवदित्यर्थः त्वंमध्येतिष्ठ ततोहं केशवंपू ज्ययिष्यामि ईश्वरेमग्नोभविष्यामि भजिष्यामीत्यर्थःमनउत्पत्तिः अपंचीकृतभूतानांसात्विकांशा द्विनिर्मलादस्ति ततःपरंपूर्वोक्त निषिद्धादिसेवनेन मलिनताजाता नतुवास्तवी मलिनतास्ति अ तएवोक्तं छांदोग्ये आहारस्यैव संशुद्धौ सत्वशुद्धिःप्रदर्शिता राग

द्वेषादिराहित्यं तस्यशुद्धिरिहोच्यते नन्वेतद्दुर्लभमुभयं यतउक्तं
रागद्वेषौ विहायैवं दुष्टान्नस्यच भक्षणं स्वधर्मश्चसदासेव्यः चित्त
शुद्धयर्थिभिर्जनैः घोरेकलियुगेप्राप्ते सर्वधर्मबहिष्कृते वर्णाश्रमाश्रि
तोधर्मः प्रायेणाल्पत्वमागतः यमस्मृतिः घोरेकलियुगेप्राप्तेसर्वध
र्मविवर्जिते वासुदेवपराराजंस्तेकृतार्थानसंशयः ॥ १ ॥ गीता
यांमांहिपार्थव्यपाश्रित्ययेपिस्युःपापयोनयः स्त्रियोवैश्यास्तथाशू
द्रास्तेपियांतिपरांगतिम् ॥ २ ॥ किंपुनर्ब्राह्मणाःपुण्याः भक्ताराज
र्षयस्तथा अनित्यमसुखंलोकमिमंप्राप्यभजस्वमां ॥ ३ ॥ भार
तेपत्रेषुपुष्पेषुफलेषुतोयेष्वक्रीतलभ्येषुसदैवसत्सु भक्त्यैकलभ्ये
पुरुषेपुराणेमुक्त्यैकथंनक्रियतेप्रयत्नः ॥ ३ ॥ सप्तसप्ततिकोट्यस्तु
रससप्ततिलक्षकाः सदाचारवतीनृणामेतेश्वासाःशताब्दके तत्रा
पिबाल्यवार्द्धक्येतथैव निशिनिद्रया भागत्रयंस्वतोगच्छेत् तुर्यांश
एवशिष्यते कलिसंतरणोपनिषदि द्वापरांतेसमभ्येत्यनारदः परि
पृष्टवान् ब्रह्माणंस्वोपदेष्टारंकलिसंतरणंविधिं ॥ ४ ॥ कथंतुभ
गवंश्चाहं पृथिवींपर्यटन्सदा संतरेयंकलिंघोरंसर्वधर्मप्रणाशकं ॥
५ ॥ साधुपृष्टोस्मिसर्वासांश्रुतीनांसरहस्यकं शृणुयेनकलिंत्वंत्व
ऽनायासंसंतरिष्यसि ॥ ६ ॥ नारायणस्यविष्णोर्वैनाम्नांभगव
तोमुनेपप्रच्छनारदोभूयस्तन्नामभगवन्वदसहोवाचशृणुष्वाद्यवि
ष्णोर्नामानिनारद यानिपठन्नरोयातिसलोकत्वादिकंहरेः ॥ ८ ॥
मंत्रः हरेरामहरेरामरामरामहरेहरे हरेकृष्णहरेकृष्णकृष्णकृष्णह
रेहरे ॥ ९ ॥ इतिषोडशकंनाम्नांकलिकल्मषनाशनं नातःपरत
रोपायः सर्ववेदेषुदृश्यते ॥ १० ॥ पप्रच्छनारदोभूयःकोस्यविधि
र्जपेप्सितः सहोवाचचनैवास्तिविधिरस्यजपेसुत ॥ ११ ॥ शु
चिःसन्नशुचिर्वास्यन्पठन्नेतिसलोकतां सामीप्यं ब्रह्मणस्तद्व
त्सायुज्यंचैतिवैनरः ॥ १२ ॥ षोडशकस्यचेत्सार्द्धं त्रिकोटिंजप

तीहयः तरतिब्रह्महत्यांचवीरहत्यांतथैवसः मुच्यतेहेमचौर्यात्स
वृषलीगमनात्तथा पितृदेवमनुष्याणामृणापनयनात्तथा ॥ १४ ॥
स्वस्वधर्मपरित्पागात्पायात्सद्यः समुच्यते इत्युक्तवांस्त्रिवारंचाब्ज
योनिर्नारदायवै गीतायांच तपस्विभ्योऽधिकोयोगीज्ञानिभ्योपि
मतोधिकः कर्मिभ्यश्चाधिकोयोगीतस्माद्योगीभवार्जुन योगिना
मपिसर्वेषांमद्गतेनांतरात्मना श्रद्धावान्भजतेयोमांसमेयुक्ततमोम
तः अत्रभजतेइत्यस्यतपोज्ञानकर्मणांभगवतिसमर्पणंयोगः सो
स्यास्तीतियोगी सएवयुक्ततरइत्यर्थः अर्थात्केवलतपोज्ञानकर्म
विदोयोग्याःतेभ्योभगवतिसमर्पकायोग्यतराः तेभ्योपितद्गतात्मा
श्रद्धावान्भजतेयुक्ततमः इत्यर्थ नाम्नोस्ययावतीशक्तिपापनिर्द
हनेहरेः तावत्कर्तुंनशक्नोतिपातकंपातकीजनः ॥ १८ ॥ हरेर्ना
मैवनामैवनामैवममजीवनं कलौनास्त्येवनास्त्येवनास्त्येवगति
रन्यथा ॥ १९ ॥ प्रथमोपायेन देवतांतरव्युदासः द्वितीयोपाये
नोपापांतरव्युदासः तृतीयोपायेनफलांतरव्युदासः कलौनास्त्येवे
तिवाक्येनिषेधत्रयेणकृतादौ विहितोपायत्रयस्य निरासः कृतः
कलौशरणागतिरेवोपायोमुख्यस्तदभावेतच्छ कलमपि मोक्ष
साधकं श्रवणंकीर्तनं विष्णोरित्यादयोनवभेदाः संति तेषांमध्य
त एकमपिसुसंपन्नं चेत्कार्यकारीभवति अन्यच्च श्रूयतांज्ञानस
र्वस्वंश्रुत्वाचैवावधार्यतां भोगेच्छामात्रकोबंधस्तत्त्यागोमोक्षउ
च्यते किमन्यैः शास्त्रसंदर्भैःक्रियता मिदमेवतु यद्यत्स्वादुहित
त्सर्वं दृश्यतांविषवन्हिवत् ॥ ३ ॥ इतिश्रीकुरुक्षेत्रांतर्गतकम
लाग्रामवासी श्रीगिरधारीदासपुत्रगीतारामनिर्मितेकर्मविवेके
प्रायश्चित्तप्रकरणंसमाप्तम् ॥ ॥ ॥ ॥ ॥

॥ श्रीः ॥

# अथ कर्मविवेकोदाहरणेद्वितीयःखंडः

## प्रारभ्यते।

देशकालौतथा पात्रंकर्ताकृत्यंसभक्तिकंषड्भिरेतैर्भवेद्योगः सर्वकर्मफलप्रदः ॥ १ ॥ देशोदशगुणः प्रोक्तः कालः शतगुणःस्मृतः पात्रंसहस्रगुणितमेतद्दिङ्मात्रदर्शनं ॥२॥ तथा कर्ता दशगुणः प्रोक्तः कृत्यंशतगुणंततः श्रद्धासहस्रगुणिताह्येतद्दिङ्मात्रदर्शनम् ॥ ३॥ षट्सुभेदाबहुविधाहुःश्रद्धातेषांबलीयसी तयैवकर्मतारतम्यं प्रयातिसर्वदानृणां ॥ ४ ॥ देशोयथा कृष्णवेणीनर्मदादिकायोजनादागतस्यैककृच्छ्रफलदा गंगाकुरुक्षेत्रपुष्करादयो योजनादागतस्य कृच्छ्रत्रयफलदा हरिद्वारगङ्गासागर प्रयगकाश्यादयो योजनादागतस्यषट्कृच्छ्रफलदा एवंकालेयथा दर्शेशतगुणंदानं तच्छतघ्नं दिनक्षयेविषुवेतच्छतघ्नंस्यादित्यादि तथाकालसमुदायोयथा अमावस्याव्यतिपातसंक्रांतिसूर्यग्रहणमेते एकदिने एवभवंतिचे दक्षयंफलं भवति पात्रमपिबहुभेदभिन्नं श्रोत्रीयत्वादितपोविशिष्टत्वादिदेवे भक्तिमत्वादिगुणविशिष्टत्वेनबहुगुणोभवति तत्रापिनारायणपरायणएवमुख्यं पात्रं युधिष्ठिरराजसूयेतथादर्शनात्तन्निष्ठा श्चतद्वदितिसत्राघ्रपात्रतारतमम्येनाधिकाधिकफलं भवति अधिकारीतुयथा शास्त्रविहितस्तत्रतत्रवक्ष्यते कृत्यमपिस्नानदानदर्शन वासविवेचनानुष्ठानादिनाबहुविधं श्रद्धातामसी राजसीसात्विकीभेदेनत्रिविधासैवएकपादद्विपादत्रिपादचतुष्पादभेदेन पुनश्चतुर्द्धा सैवापरिवर्वर्ति अथोदाहरणं यथाकश्चित्तीर्थस्नानार्थंगतः तत्र

तीर्थमेवपात्रंदेशश्चकालोवर्तमानं पर्व एवंकर्ताकृतस्नानपूर्वकृत्यः कृत्यंस्नान संध्यातर्पणादि श्रद्धामनोभाक्तिस्तदनुसारेण फलं एवंयत्रषट्कसंपतिश्चतुष्पादपूर्त्तिश्रद्धाचस्यात् तदातत्कालकृतकर्मणस्त दैवतत्फलमुदेतिअत्युग्रत्वात् प्रारब्धस्यापिबाधोभवति हिरण्यकशिपुरावणध्रुवबिभीषणादिवत् श्रद्धानुसारेणफलमुदेति अथदाने उदाहरणं तत्रदेशः कुरुक्षेत्रं कालः सूर्यग्रहणं पात्रं तत्रवासीश्रोत्रीयत्वादिगुणविशिष्टसीदत्कुटुम्बश्च आत्माकृतस्नानो पवासयुक्तएवतत्काले स्पर्शत्वात्तत्रकृत्यंसुवर्णधेनु तिलधेनुतुलादानादि एतत्सर्वं एकपादद्विपादादिश्रद्धायुक्तंचेद्वर्षमासदिनादिभिः शीघ्रंफलं प्रारब्धबाधोराज्यप्राप्त्यादिसुखंचभवेत् किंचिन्न्यूनेन्यूनंवज्रलेपापर्वथोऽक्षयंफलं वा तत्कालेएवोदेतिएतत्फलभोगेअंत्याभावएवयावतज्जातीयं पापंनकरोतितावद्भोगःस्यादितिनिश्चयःअथदर्शनेउदाहरणं कश्चिद्बद्रीयात्रांचिकीर्षुः जगदीशदर्शनंवा चिकीर्षुःश्रीरंगद्वारिकादियात्रांचिकीर्षुःतत्रदेशोदेवसंनिधिःकालोरथोत्सवादिःपात्रंदेवः कृत्यंतद्दर्शनं आत्मापादचारी ब्रह्मचारीप्रतिग्रहादिवर्जितः यादृशीश्रद्धयाशरीरकाष्ठांकरोति तादृक्फलंपादादिमितं वासविवेचनानुष्ठानादिषूदाहरणं तत्रदेशोगंगातीरादि कालः प्रातःकालादि पात्रं ईश्वरः कृत्यंभागवतादिश्रवणवाचनादि देवार्चनादिवा चांद्रायणादिर्वा गायत्र्यादिपुरश्चरणंवा आत्माकृतनित्यक्रियः यथायथाश्रद्धयामनसोधिकतयाप्रवृत्तिःतत्रतत्रतदेवफलंपरीक्षाप्रकरणेपरीक्षणीयफलस्याल्पत्वबहुत्वेदेशकालादिषु कारणत्वंबोध्यं भोगेतुसाधारणकर्मणो यथाकालंउग्रस्यमृतेसतिपरलोके सर्वेभ्यः प्रथमं अत्युग्रस्यतुपादादिप्रमाणेन वर्षमासपक्षादिना इहैवभोगः संपूर्णतयासमाप्तिः वज्रलेपापरपर्यायाक्षतेतुअंताभावएव यावत्तत्प्रतिरूपं त

त्सदर्शनंकरोति पापंपुण्यंवाकृतेतुपुण्येनपापस्यनाशः पापेनपु ण्यस्यनाशः तत्प्रतिरूपकेणेतिनिश्चयः अतश्चतुर्विधकर्मसु आ द्यत्रयस्यांतवत्फलंवज्रलेपस्यतुतत्प्रतिरूपकप्राप्तिपर्यंतमि तिदि क् एतदर्थ मेवदेवतीर्थादिसमाजोलोकेजनैः क्रियतेअन्नसत्रंप्र पादानंरोगिभ्यऔषधदानंधर्मशालादिकूपादि निर्माणं अत्युग्र पुण्यार्थंलोकेजनैःक्रियते देवदर्शनं तीर्थाटनादि इतिकर्मविवे कोदाहरणे मुख्य विवेकः अथोदाहरणानिब्राह्मणक्षत्रियादीनांत त्रयद्यत्पापंस्वोदाहरणेन दृश्यते तत्त त्परकीयोदाहणे विचारणी यंस्वमनसियदितत्स्वस्मिन्नागतंचेत् पापंपुण्यंचतदातुतत्पुण्येनै वतत्पापनिरसनं विधायपरीक्षाध्यायेस्वांतःकरणंपरीक्षणीयंय दितत्पापपुण्येनउदाहरणेन श्रूयतेतदा अन्यतरश्रवणेचतत्त न्निर्णयंविधायपापानां प्रायश्चित्ततीर्थस्नानादिसतिविभवे गो दानादीनेतद्ग्रंथोक्तरीत्या कुर्यात् पापनिवृत्तिर्भवति पुण्या धिक्येतु सुतरामनुकूलमेव जातमिति भावः अथोदाहरणं यथाकश्चिद्द्विजोमध्यदेशीयोयावत्स्वस्थमिदंशरीरमरुजंयावज्ज रादूरतः तावत्स्वहितंकुर्यात् तथायोनरइहमन्वादिप्रोक्तं मनो वाक्कायैः कृतपापस्य प्रायश्चित्तंनकरोति निश्चयेननरकयात नां भुनक्तितथाअग्नौब्राह्मंहिपुरुषं कर्मान्वेतिस्वयंकृतं उत्सृ ज्य विनिवर्ततेज्ञातयः सुहृदः सुताः आत्मपुराणे द्वासप्ततिस हस्त्राणि वृश्चिकाण्येकहेलया यथादंशंतिगात्रेषु पुच्छैः सूच्यग्र संनिभैः तथातज्जायतेदुःखंमुमूर्षोर्देहमोचने १ तथाकोट्यर्द्धसंहि तातिस्त्रः कोट्यः सूच्यः सुतीक्ष्णकाः यादृक् शरीरिणः कुर्युस्ता दृक्दुखंमृतौनृणां ॥ २ ॥ हस्तौ पादौ क्षिपंतंच भूमिस्थंगतचे तनं स्वजनास्तंतुशोचंति काकंकाकायथातुरं ॥ ३ ॥ बांधवेषुभृ शंशब्दान्मुंचत्सुयमकिंकराः नयंत्येनंयथाराजभृत्याजातापराधकं

॥ ४ ॥ इत्यादिश्रुत्वादिवसास्तस्मान्मृत्योः पूर्वमेवपूर्वकृतधर्मा धर्मयोःविवेकंकृत्वास्वहितंकुर्यादितिनिश्चित्यपर्वदिनआगत्यप्रण म्यव्रते भोविद्वांसः सर्वेधर्मविवक्तारोगोप्तारः सकलाद्विजाः मम देहस्यसंशुद्धिं कुर्वंतुद्विजसत्तमाः ॥ ५ ॥ मयाकृतंमहाघोरं ज्ञा तमज्ञातकिल्विषं प्रसादः क्रियतांमह्यंशुभानुज्ञांप्रयच्छथ ॥ ६ पूज्यैः कृतपवित्रोहं भवेयंद्विजसत्तमैरितिमंत्राभ्यां प्रार्थ्यमा जन्मतः कृतपुण्यपापकर्मणां विवेकं कृत्वायद्यदावश्यकंकर्त्तव्यंत द्भूतयेनाहं परलोकेसुखंस्यां ततस्तेतमूचुः कस्त्वंकथंजीवसिकृ तकर्मणांपरंपरांवद सउवाचअहंब्राह्मणोस्मि विज्ञापयामि श्रुता श्चबहवोधर्मा पुराणश्रुतिचोदिताः तथापिपापबुद्ध्यामेनकृतं चात्मनोहितं ॥ १ ॥ आशापाशमनुप्राप्तः शुभशास्त्रविवर्जितः कृतवान्पापमेवाहं नाकिंचित्सुकृतंकृतं पुण्यात्पापंक्षयंयातिपुरा णेश्रूयतेमुने पुण्योपदेशंकथययेनपापक्षयोभवेत् ॥ ३ ॥ यदि मेसुकृतदुष्कृते समतामेव प्राप्नुतेतदाहवामन्यत्सुकृतं करिष्ये म मकर्माणिशृणुतमयाशास्त्रबलात् श्रुत्यर्थंविपरीतंकृत्वा पंडितत्र यपराजयः कृतः ॥ १ ॥ प्रौढापुत्री विवाहिता सरजस्का ॥ २ एकदाब्राह्मणेनकलहेतच्छिरस्ताडनेरक्तश्रवोजातः ॥३॥ रजस्व लाभार्यामुखचुंबनंजातं ॥ ४ ॥ एकदातीर्थेगायत्री पुरश्चरणं सपादलक्षात्मकंकृतं ॥ ५ ॥ एकदादिनेकुलजा कन्यारमिता ॥ ६ ॥ काशीयात्राशतयोजनं गत्वाकृता ॥ ७ ॥ एकदातीर्थे ऽनशनंगृहीत्वासप्तदिनानंतरं क्षुधावृद्धिरतीवजातो तोनिवृ त्तोभोजनमकरवं ॥ ८ ॥ पंचविंशतिगावो वर्धकेभ्यो मो चिताः॥ ९ ॥ बदरीनारायणयात्राकृताषष्ठियोजनात् पद्भ्यां ॥ ॥१०॥सोमवत्यांगोदानंकृतं ॥ ११ ॥ परदाराब्राह्मणी गम नंकृतंकामतः ॥ १२ ॥ त्रिवारं श्यालिकागमनंकृतं ॥ १३ ॥

गृंजनलशुनकलिंगमसुरिकाभक्षणं अभ्यासेनकृतं ॥ १४ ॥सेतुयात्रा विन्ध्यदेशात्पादचारेणकृता॥१४॥सोमवत्यांयमुनास्नानं विंशतिवारं पंचयोजनात्कृतं ॥ १५ ॥ विष्णोः सहस्रनाम्नां चतुर्थ्यंतानांतीर्थे ५१ पाठाःकृता एकपंचाशत् ॥ १६ ॥ ब्राह्मणभोजनंपंचाशत्संख्याकंकारितंसोमवत्यां ॥ १७॥ एकदा ब्राह्मणायगोदानंदास्यामीत्युक्त्वानदत्तं ॥ १८ ॥ तीर्थेसपाद वर्षं प्रत्यहंचंपापुष्पैर्विष्णवर्चनंकृतं ॥ १९ ॥ तुलसीकाष्ठेस मीरूपेसहस्रं तिलहोमोव्याहृतिभिः कृतस्तीर्थे ॥ १८ ॥ ब्राह्मणस्यवृत्तिर्हृता ॥ १९ ॥ पुरुषसूक्तस्यषोडशपाठाःसंवत्सरंप्रत्यहंकृताः॥ २० ॥ ज्येष्ठभ्रातुः प्रथमंविवाहोममजातः ॥२१ ॥ वेश्यागमनंकृतं ॥ २२ ॥ अथविवेकश्रुत्यर्थं विपरीतेब्रह्महसमंपापं तथाकुमार्गेणब्राह्मणत्रयपराजयश्च सुमार्गेण शास्त्रविचारस्तु परंपरातोवर्ततएव मिलित्वाचतुर्ब्रह्महसमंपापं समेऽर्द्धंतत्रषष्ट्युत्तरशतत्रयंकृच्छ्राः ॥ ३६० ॥ तन्निवारणाय सेतुयात्रायांषष्ट्युत्तरशतत्रयंकृच्छ्राःसमतां विधेयाः १ प्रौढापुत्रीविवाहे ब्रह्महत्यासमं तथाब्राह्मणवृत्तिहरणे ब्राह्मणहननसमंसमेतदर्द्धं प्रायश्चित्तंतस्मादेतयोः नवति नवतिकृच्छ्राः पापंतद्योगेअशीत्युत्तरशतसंख्याजाता तन्निवारणाय षष्टीयोजनतोबदरियात्रातावत्कृच्छ्रात्मिका समाविधेयाः ॥ २ ॥ कुलजारमणेज्ञानतश्चांद्रायणद्वयं तयोःषट्कृच्छ्राः दिनप्रत्युक्तंचैकं कृच्छ्रं तथा श्यालिकागमनेचांद्रायणं तस्यकृच्छ्रत्रयंयोगेकृच्छ्रदशकंः तन्निवारणाय दशकृच्छ्रात्मिकं सोमवत्यांगोदानं समंविधीयतां ॥ ३ ॥ रजस्वलाभार्यामुखचुंबने सुरापानसमं पापंसमष्ट्यार्द्धं प्रायश्चित्तंतत्रनवति कृच्छ्रःतथापरदाराब्राह्मणीगमने चांद्रायणं तस्यकृच्छ्रत्रयं ज्ञानतोऽनापदि गृंजनादि चतुष्कस्याभ्यासेन भक्षणेषोडशचांद्रा

यणंतेषामष्टचत्वारिंशत्कृच्छ्राः यवनीवेश्यागमने चांद्रायणद्वयं ज्ञानतो द्विगुणमितिचांद्रायणचतुष्कं तेषांद्वादशकृच्छ्राः विप्रर क्तश्चवैचैकं कृच्छ्रं योगेचतुःपंचाशदुत्तरं शतंकृच्छ्राः १५४ तन्निवारणाय विंशतिवारं पंचयोजनात्सोमवत्यां यमुनास्नानंसा र्द्धशतकृच्छफलं तथासपादवर्षं चंपापुष्पै रष्टोत्तरशतैः प्रत्यहम र्चनेकृच्छ्रचतुष्टयं जातंसर्वयोगेचतुः पंचाशदुत्तरं शत १५५ कृच्छ्राजाता परस्परंहन्यतां ॥ ४ ॥ तीर्थेगृहीतानशनव्रत त्यागेब्रह्महा आत्महा चेतिपापद्वयेषष्ट्युत्तरशतत्रयं कृच्छ्राः १६० तन्निवारणाय पंचविंशतिधेनुमोचनं बंधकेभ्यस्ताव त्कृच्छ्रात्मकं समंविधेयं ॥ ५ ॥ आज्ञानतो निर्गुणब्राह्मणवधे अशीत्युतरं शतंकृच्छ्राः ज्ञानतोद्विगुणं ॥ १६० ॥ सर्वत्रैवंविचा रोबोद्धव्यः एवमातिदेशिकेपिज्ञेयं ब्राह्मणायगोदानमुक्तानदत्तं कावेर्यां गोदावर्यां वा तत्रब्रह्महसमंपापं तत्रचतुर्विंशतिमतेस हस्रकृच्छ्रापनोद्यनंपापं अस्ति परंतु समेप्वर्द्धमितिरीत्या पंचश तकृच्छ्राजातास्तत्रकावेरीतीर्थे प्रत्युक्तंसार्द्धगुणंकर्तव्यमितिसार्द्ध सप्तशत कृच्छ्राः भवंति तन्निवारणाय तीर्थेकृतं सपादलक्ष गाय त्रीजपे सपादशतकृच्छ्रा जातास्तीर्थत्वात् अथचशतयोजनतो वाराणशीयात्रायां षट्शतंकृच्छ्राः पंचाशद्ब्राह्मणभोजने कृच्छ्रच तुष्कं तथाविष्णोः सहस्रनाम्नां पंचाशत्पाठे कृच्छ्रचतुष्कंजातं संवत्सरं पुरुषसूक्तपाठे सप्तशतकृच्छ्रा उभयत्रयोगे सार्द्ध सप्तशतंकृच्छ्राजाताः साम्यतां संकल्पनिया ६ परिवेत्ताविष येकृच्छ्रातिकृच्छ्रा तथात्रैमासिकं मानवोक्त रीत्यायाज्ञवल्क्यरी त्याचांद्रायणं सर्वमेलनेन्यूनातिरेके चत्रयोदशकृच्छ्राजातास्तन्नि वारणायतुलसीकाष्ठे समिद्रूपेघृताक्त सहस्रतिलहोमे कृच्छ्र चतुष्कंजातं तदेवोर्वरितमस्तिअथचनवकृच्छ्रात्मकफलकमन्य

त्संपादनीयमृयेनाशेषपापपुण्यसाम्यंजायते तदनंतरं परीक्षा ध्यायेंतः करणं परिक्षणीयंकिंचित्सुकृतं निष्पाद्येतिभावः सर्व पापेभ्योधर्मसंपत्तिः बह्वधिकतयाजाताचेत्सम्यक् परीक्षासेत्स्य ति हृदयेअन्यथानेतिनिश्चयः तथाकर्मविवेकोद्विविधस्तत्रप्रति पदोक्ताद्यविवेचनरूपस्तथासंघाताद्यविवेचनरूपश्चधर्माधर्मयोः साम्येआद्यः वैषम्येद्वितीयइतिसर्वत्र विचारणीयं विवेकोजात इतिभावःउदाहरणांतरं एवमेवपूर्ववत्प्रार्थनां विधायापरोद्विजोब्र तेमयाब्राह्मणस्यदंडप्रहारेणास्थि भेदः कृतः ॥ १ ॥ एकदारात्रौ चौर्यंगतेनरुद्धेनाज्ञानाद्ब्राह्मणोहतो मृतश्च ॥ २ ॥ एकदा ब्राह्म णीगर्भहत्याकृता ॥ ३ ॥ एकदाभूमिविषये कूटसाक्षीविधत्ता॥४॥ वेंकटेशयात्राकृताद्विशतयोजनाद्गत्वापादचारेण ॥ ५ ॥ एकदा एका आत्रेयीब्राह्मणीहता ॥ ६ ॥ सरस्वतीप्रतिस्रोतेन प्रभासा त्लक्षपर्यंता प्रदक्षिणीकृता ॥ ७ ॥ उद्यानेचतुष्पथेतडागः संव त्सरजलस्थायी कारितः एकदाअज्ञानात्कुसंगदोषान्मद्यंपीतं वृक्षासवरूपं ॥ ९ ॥ गृहदानं सपरिच्छदं कृतं ॥१०॥ जगदी शयात्राद्विशतयोजनात्पादचारेणकृता॥ ११ ॥मकरेप्रयागेकल्प वास एकदाकृतः॥१२॥ द्विवारंकार्तिकस्नानंकृतंपुष्करे ॥ १३ ॥ एकदास्वभार्याभ्रमे मातुलसुतागमनं कृतं ॥१४॥ एकदासुवर्णा पहारेब्राह्मणस्यगृहेनिश्चयो विहितः पुनर्हरणं तुनकृतं ॥ १५ ॥ एकदाअनन्यौषधि साध्यरोगेमूर्च्छितपैष्टीपायिताअपरैः ॥१६॥ तदानिवृत्तेरोगे भूमिदानंकृत्वापुनः संस्कारः कारितश्च ॥ १७ ॥ मयाएकदापितृव्यस्त्रीगमनं कृतं स्वभार्याभ्रांत्या ॥१८॥ तथैव स्नुषागमनंकृतं॥१९ ॥एकदाद्वादशदिन उपवास साध्यं जलपा नवर्जितंयत् तत्पराकव्रतं कृतं एकदापुरुष गोमुष्कछेदनं कृतं बीजकोशनाशः कृतः॥ २१ ॥ एकदापर्वणि पंचाशत् ब्रा

ह्मणभोजनं कारितं अमायां ॥ २२॥ संवत्सरं एकादशीउपवासः कृतः ॥ २३ ॥ यथोक्त विधि पूर्वकं भाद्रपदे सप्ताहयज्ञः कृतः ॥ ॥ २४ ॥ गीतापाठः प्रत्यहं संवत्सरं कृतः ॥ २५॥ अथविवेकः चौर्यकरणेअज्ञात ब्राह्मणहननरूपेपापेसरस्वती प्रतिस्त्रोतया त्रात्मकंकर्म प्रायश्चित्तं संकल्प्यतां अत्रापि प्रतिपदोक्ताद्यविवेक एव उभयत्रषष्ट्युतरशतत्रयं कृच्छ्राः तुल्या गर्भवधरूपपापे ग्रहदानं सपरिच्छदं यत्कृतं समर्प्यतां ॥२॥ भूनिमित्तककूटसाक्षिविषयेपापे संवत्सरजलस्थायीतडागोयः कारितस्त्वयात स्यसंकल्पः कर्त्तव्यः उभयत्रषष्ट्युत्तरशतः त्रयंकृच्छ्रा ३६० ब्राह्मणीआत्रेयीहननेद्विशतयोजनात्पादचारेणकृतावेंकटेशया त्रातुल्यतयाविधीयतां ॥ ४ ॥ ब्राह्मणास्थिभंगकरणेपापेद्विवार कृतपुष्करेकार्त्तिकस्नानंविधीयतां ॥ ५ ॥ अज्ञातमातुलसुताग मनेपापेमकरेयः कल्पवासः कृतः सोस्तुनिवृत्तये ॥६॥ मासस्रुवर्ण पहारेपापेतन्निवृत्यर्थंकृत पराकव्रतस्यसंकल्पःकर्त्तव्यः॥७॥अन न्यौषधसाध्यैरोगमूर्छितस्यपैष्टीपानेपरैः कारितेभूमिदानंकृत्वापु नःसंस्कारोयःकृतः सोनिवृत्यर्थमस्तुतद्विषयेतदेवप्रायश्चित्तमुक्तं ॥८॥ स्वभार्याभ्रांत्यासकृत्पितृव्यपत्नीगमनेचांद्रायणंप्रायश्चित्तं तच्चसोमवत्यांपंचाशद्विजभोजनंयत्कारितंतत्समंविधीयतांचतुः कृच्छ्रफलदस्यचांद्रायणतुल्यत्वात् ॥९॥ स्वभार्याभ्रांत्यास्नुषाग मनेषट्त्रिंशत्कृच्छ्राःसंव सरंप्रत्यहंगीतापाठेपिषट्त्रिंशत्कृच्छ्रा भवंतिउभयोःसाम्यंविधीयतां॥१०॥सर्वनियमग्रहणपूर्वकंचतुर्भु क्तिवर्जितदिनत्रयसाध्यैकादशीव्रतेसजागरणेदशकृच्छ्रफलंजा गरणरहितेऽर्द्धंतदेवाशेषविधिनाकृतं गोमुष्कच्छेदेपापेगोवधतु ल्येफलेसंगंविधीयतां ॥ ११ ॥तथैवद्वितीयेकादशीव्रतंविधिपूर्व कंचेद्दार्वास्व्यमद्यपानेसमंविधीयतां तत्वंतुएकादशीव्रतस्यसर्वे

षांनित्यत्वात्तद्दानौस्वात्मनाशोतोव्रतंतु प्रायश्चितेनैवयोजनीयंस
म्राहयज्ञएवोभयत्रसामान्येनयोज्यस्तेनसर्वपापनाशः ॥१२॥अव
शिष्टैकादशीव्रतंचाधिकमस्तिपरलोकभोग्यंइतितवकर्मविवेकः॥
उदाहरणांतरं कश्चिद्द्विजेकृतेपूर्ववत्प्रार्थनांविधायममकृतकर्म
णां विवेकंकुरुत ॥ मयाब्राह्मणस्य दशमाषमितं सुवर्णंहृतं एक
दाक्षत्रियस्य पंचाशत्संख्याकंरूप्यंहृतं ॥ २॥ द्वितीयेवैश्यस्य
शतद्वयंरूप्यंहृतं ॥ ३ ॥ एकदापंचरूप्यंहृतं ब्राह्मणस्य॥ ४ ॥
एकदासंवत्सरं फलाहारभोजनेननीतं ॥ ५ ॥ एकदास्वभार्या
भ्रांत्यासपत्नीमातृगमनंकृतं ॥ ६ ॥ एकदास्वभार्याभ्रांत्यैवसो
दरास्वसागमनंकृतं ॥ ७॥ एकदाकामांधेनअंत्यजायवनजाति
स्त्रीगमनंकृतं ॥ ८ ॥ कामांधेनैवसुतागमनंकृतं ॥ ९ ॥ बहुवा
रं पशुगमनंकृतं ॥ १० ॥ एकवारंगोगमनं ॥ ११ ॥ एकदाम
दीयागौर्जलपल्वलमग्नाश्वापदैर्भक्षिता ॥ १२ ॥ दशदिनमज्ञा
त्वापतितसंसर्गः कृतः॥ १३ ॥ एकदागोमांसखादकेभ्यः सका
शाद्गोविनिगमनेनस्वकीयांदत्वातदीयागृहीतातत्रममत्वेवंप्रति
भातियादृशीदत्ता तादृशीगृहीतापापं नास्ति तुल्यताजातापरंतु
विचार्यं ॥ १४॥ वर्षपंचकं आपणव्यवहारः कृतः तत्रतिलपुष्प
फलमूलपक्वान्नलाक्षालवणमधुतैलक्षीरद धिघृततक्रचंदनसुवा
स ऊर्णकेशरधेन्वहुद्रूहवेश्मशस्त्रस्नायुनखशुक्ति हिंगुगुग्गुलस
र्जरसहरितालमनःशिलांजनगैरिकम णिमौक्तिकप्रवालदंतवस्त्रवे
णवमृन्मयपात्रादि विक्रयः कृतः ॥ १५ ॥ एकदारेलमार्गेणनौ
कामार्गेणवाकाशीप्रयागयात्राकृतापंचक्रोशाख्याप्रदक्षिणाप्रया
गप्रदक्षिणाच॥१६॥घृताक्तलक्षवर्तीज्वालनंकृतं ॥ १७॥ उभयत्र
शतंशतंब्राह्मणभोजनं कारितं॥१८॥ एकदायोनिक्षतेनस्वजातौ
कुमारी गमनंजातं ॥१९॥ स्वश्रूगमनंचजातं॥२०॥ एकादासार्द्ध

शतयोजनात्पादचारेण गंगासागरस्नानंकृतं ॥२१॥ पुंसिमैथुनं चजातं ॥२२॥ स्वभार्यायांमुखमैथुनंचजातं ॥२३॥रजस्वलास्व भार्यागमनंचजातं॥२४॥एकदागुरुपुत्रीगमनंचजातं ॥२५॥कनिष्ठभ्रातुर्भार्यागमनंजातं॥२६॥पितृव्यतनयागमनंचजातं॥२७॥ भागिनेयीगमनंचजातं ॥ २८ ॥ रजकीव्याधपत्नीधीवरपत्नी गमनंचजातं ॥ २९ ॥ शिष्यभार्यागमनंचजातं ॥ ३० ॥ शूद्रागमनंचजातं ॥ ३१ ॥ क्षत्रियागमनंचजातं ॥ ३२ ॥ वैश्यागमनंच जातं ॥ ३३ ॥ एकदासर्वस्वदानंकृतं ॥ ३४ ॥ ततः परंशरणागतिः प्रपत्तिगुरुसद्मनिविष्णुविषयेकृता ॥ ३५॥ वृंदावनेस्थितिः कृता ॥ ३६ ॥ मृतामोहमयीमाताजातो बोधमयः सुतः सूतकद्वयसंपर्कात्कथं संध्याउपास्महेइत्यादिसंप्रदायशास्त्रंश्रुत्वातथा सर्वधर्मान्परित्यज्येत्यादिच श्रुत्वासर्वकर्मत्यागपूर्वकं निवासः कृतः मम कर्मविवेकंकुरुत अथविवेकः अत्रसंपाताघविवेकः कर्त्तुं शक्यस्तदेवाह ब्राह्मणस्य दशमाससुवर्णहरणे पुनरेकादशगुणंप्रत्यर्पणे चांद्रायणत्रयं अन्यथाचतुर्गुणं द्वादशचांद्रायणं तन्निमितं षट्त्रिंशत्कृच्छ्रंभवति ॥ ३६॥ सुवर्णहरणेषट्त्रिंशत्कृच्छ्राजाता १ दशवारंपशुगमनेकृच्छ्रं ४ क्षत्रियस्यपंचाशद्रूप्यहरणेपुनरतर्पणेनवकृच्छ्राजाताःपूर्ववत् १८०१२ वैश्यस्यशतद्वयरूप्यहरणे द्वादशकृच्छ्राअनर्पणेजातापूर्ववत् १० ब्राह्मणस्यपंचरूप्यहरणेकृच्छ्रं १७ प्रपालनाद्गोनाशेकृच्छ्रं १८० स्वभार्याभ्रांत्यासपत्नीमातृगमनेकृच्छ्राः१८० कामतोंत्यजागमनेकृच्छ्रा ३४ कामतः स्वात्मजागमनेमरणांतेकृच्छ्रा ३७ योगकृच्छ्रस्तुल्यताज्ञेय ८० संवत्सरंफलदुग्धादिपानेषष्टिकृच्छ्रा।९००। सार्द्ध शतयोजनाद्गंगासागरेपादचारेणगमने नवशतकृच्छ्रा ९६० योगस्तुल्यताज्ञेयापुनः पापविषयेकृच्छ्राः अज्ञातस्वसाग

मनेस्वभार्या भ्रांत्या १८० ॥ गोगमनेकृच्छ्रा ३ ॥ दशदिनपतित संसर्गेकामकृते १॥ आपणनिर्मिते दशकृच्छ्रा १० तत्तदपण्य विक्रये द्विसप्तति ७२॥४ अंगुल्याकन्यात्वनाशेगमनेचचांद्रंकृ च्छ्रंच॥ ३६० श्वश्रूगमनेकामकृते २ पुंसिमैथुनेकृच्छ्रद्वयं २॥ स्वभार्या मुखमैथुनेकृच्छ्रं॥ ३ गुरुपुत्रीगमने ॥३ कनिष्ठभ्रातृभा र्यागमने कृच्छ्रा ३ पितृव्यतनयागमने कृच्छ्रा ३ भागिनेयी गमने॥ ३ रजकीगमने॥ ३ व्याधपत्नीगमने ॥ ३ धीवरीगमने ७॥ शिष्यभार्यागमने ॥ २ ॥ क्षत्रियागमने सार्द्धकृच्छ्रद्वयं॥२॥ रजस्वलाभार्यागमने॥ १॥ वेश्यागमने॥ ३६० नित्यकर्मत्यागे शरणागतिनाशः १०२८ अथपुण्यविषयेकृच्छ्राः ३४ काशीपंच क्रोशीयात्रायांकृच्छ्रा ॥ २४ प्रयागेमध्यमप्रदक्षिणायां चतु र्विंशतिकृच्छ्राः॥ २ घृताक्तलक्षवर्तिज्वालने कृच्छ्रद्वयं ॥ १६ ॥ षोडशकाश्यांप्रयागेच शतंशतंब्राह्मणभोजने ॥ ३६० सर्वस्व दाने॥ ३६० शरणागतिकरणे॥ ३६० वृंदावने क्षेत्रन्यासेन स्थित्यां॥ पुनर्भगवद्देशवासेशरणागतिःतत्र३६० सकलंजातं ॥ ११६१ कृच्छ्राः ॥ पापनाशार्थंपुण्यंसंकल्प्यपरीक्षाध्यायेस्वांतः करणंपरीक्षणीयं विवेके संदेहनिवृत्तिरस्मिन्ग्रंथेएवकर्त्तव्या अथोदाहरणांतरंकश्चिदन्योद्विजःपूर्ववत्प्रार्थनांविधायब्रूतेस्वपा पपुण्यविवेचनंकारयितुंमयानिक्षेपापहारःकृतोब्राह्मणस्य ॥ १ ॥ एकदाश्वहरणं ॥ २ ॥तिलहरणंचकृतं॥ ३ ॥घृतदधिदुग्धहर णंकृतं ॥ ४ ॥रसापहारः ॥ ५ ॥लवणगुडापहारः॥ ६ ॥नीली विक्रयःकृतः ॥ ७ ॥आगमविक्रयोवेदविक्रयःकृतः ॥ ८ ॥सोमो दकविक्रयःसोमवल्लीरसविक्रयःकृतः॥ ९ ॥कृष्णाजिनविक्रयःकृ तः ॥ १० ॥शुष्कमांसंकवकं भौमं अज्ञातसूणास्थंछत्राकं भु क्तं॥ ११ ॥ केतनं कृत्वानदत्तं ब्राह्मणनिमंत्रणं कृत्वा भोजनंन

दत्तं ॥ १२ ॥ स्वैरिणीगमनं जातं स्वजातौ ॥ १३ ॥ बंधकी गमनं जातं ॥ १४ ॥ क्षत्रियजातौबंधकी गमनं जातं ॥ १५ ॥ वैश्यजातीय बंधकी गमनं जातं ॥ १६ ॥ अत्यंताभ्यस्तबंधकी गमनं जातं ॥ १७ ॥ दारव्यतिक्रमं जातं ॥ १८ ॥ वृषल्यांजनितापत्यताजाता ॥ १९ ॥ अज्ञानतोकथं चित्त्वांडालीगमनंजातं ॥ २० ॥ यवनीगमनंजातमकामतः ॥ २१ ॥ अज्ञानतः चांडाल्यागर्भपर्यंतं गमनं जातं ॥ २२ ॥ रजकादि सप्तांत्यजस्त्री गमनं जातं ॥ २३ ॥ हीनवर्णगांब्राह्मणींगतोहं ॥ २४ ॥ पंचमहायज्ञकरणंविनाभोजनं कृतं ॥ २५ ॥ परकीयप्रेतस्यप्रेतकर्मअकृत्वाधनहरणं कृतं ॥ २६ ॥ वेदनिंदाकृता ॥ २७ ॥ पितृष्वसूसुता मातृष्वसृसुताचविवाहिता ॥ २८ ॥ स्वगोत्राचविवाहिता॥२९॥ भार्यामुखमैथुनं चकृतं ॥ ३० ॥ गोशकटयाने मैथुनं कृतं॥३१॥ भूमिकन्या विषयेअनृतं ॥ ३२ ॥ सपिंडश्राद्धेभोजनंकृतं ॥ ३३ ॥ सपिंडीकरणात्प्राक्मासिके भोजनंकृतं ॥ ३४ ॥ दुर्वृत्ताभार्याहृता ॥ ३५ ॥ स्ववर्णेदुष्टाभार्याहृता ॥ ३६ ॥ एकदाअज्ञातस्त्रीवधः कृतः ॥ ३७ ॥ मार्जारनकुलगोधामंडूकाः हताः ॥ ३८ ॥ फलवृक्षछेदनंकृतं ॥ ३९ ॥ महापापेनअन्यस्यमिथ्याभिशंसनं कृतं ॥ ४० ॥ क्रोधेनभार्यां अगम्यात्वंउक्त्वापुनर्गमनं कृतं ॥४१॥ विप्रवधयुक्तशपथः कृतः ॥ ४२ ॥ शरणागतत्यागः कृतो भार्यात्यक्ता ॥ ४३ ॥ वर्षचतुष्टयंअनाश्रमी ॥ ४४ ॥ बलाक्याहंसप्लवगखंजनकारंडवचक्रवाकगृहकपोतचटकपारावतपांडुशुकसारिकासारसटिटिभउलूककाकोलश्येनरक्तपादजलपादवाग्गुरुचाषभाषवायसकोकिलशाद्दलिककुक्कुटहारीतभक्षणं कृतं॥ ४५ ॥ मत्स्यादंमत्स्यंचमंडूकंभक्षितं ॥ ४६ ॥ अथपुण्यगणना वैद्यवृत्या ब्राह्मणद्वयंरोगार्तितोरक्षितं १ एकः क्षत्रियः २ एकोवैश्योरक्षि

तः॥३॥एकःशूद्रश्च॥४॥अपरब्राह्मणत्रयेक्षत्रियद्वयेएकस्मिन् वैश्ये एकस्मिन्शूद्रेच बहुयत्नःकृतःपरंतुनजीवितास्ते ५अमायांत्रिंशद्ब्राह्मण भोजनं कारितं॥६॥चातुर्मास्येअमायांश्रावणेभाद्रे आश्विने चत्रिंशत् त्रिंशद्भोजितं विप्राणां॥७॥ गंगायांगोदानंकृतं॥८॥ प्रयागेसपादलक्षगायत्र्याजपः कृतः॥९॥ पुष्करेकार्तिकस्नानं मासपर्यंतं कृतं पंचाशद्ब्राह्मणभोजनं चकारितं १० प्रयागे द्वादश तिलपात्रदानं कृतं ११ क्षुधितगोभ्यो घासभारशतकं दत्तं १२ कुरुक्षेत्रेसूर्यग्रहे एक सुवर्णप्रमाणं हिरण्यंदत्वा मुक्तः अथविवेकः ॥३६०॥ ब्राह्मणनिक्षेपापहारे कृच्छ्राः १६० तिलहरणेपंचदशकृच्छ्राः॥ ३६० ॥ नीलीविक्रये ८ भूमिजकवकछत्राकादिभोजने ॥१२॥ अश्वहरणंकृत्वा दत्वाकृच्छ्रत्रयं३पुनरदाने चतुर्गुणं॥१२॥ घृतदुग्धहरणे पुनरर्पणेदश१०पुनश्चनार्पणे॥४०॥वेदविक्रये ३॥ निमंत्रितविप्राभोजने ॥ ६० ॥ सोमोदकविक्रये एवंरसापहारे ॥ ६० ॥ कृष्णाजिनविक्रये॥ १ ॥ लवणगुडापहारे ॥८॥ शुष्कमांसविक्रये ॥ १ ॥ अत्यंताभ्यस्तबंधकीगमने कृच्छ्रं ॥

## अथपुण्य कर्मणां कृच्छ्राः

९०० वैद्यवृत्या अनाथ ब्राह्मणद्वयस्य स्वगृहेण औषधपथ्यादि सेवाकरणेन नैरुज्यंकृतं तत्राष्टशत कृच्छ्राः
३०० एवमेक क्षात्रियस्यापि नैरुज्यं कृतं
२०० एवमेकवैश्यश्च
१०० एवमेकशूद्रस्य नैरुज्यं कृतं
६०० एवमेवापद्ब्राह्मणत्रये पूर्णयत्नः कृतः परंतु नजीविता अतोत्रविषयेद्विकृच्छ्रषट्शतंजातं
३०० क्षत्रियद्वयेपि
१०० वैश्यविषयेपि
५० शूद्र विषयेच
१०

## पापेषु९०९कृच्छ्राः

पूर्व ९ योगः
३० दारव्यतिक्रमे
३६ वृषल्यां जनितापत्यः
७ अज्ञानतः चांडालीगमने
३ यवनीकामतोगमने
३ अज्ञातः चांडाली गर्भे
३६० ज्ञानतोगर्भे चांडाल्यां
३० रजकादि सप्तांत्यज स्त्रीगमने भोजने वा प्रतिग्रहे वा
३० हीनवर्णगांब्राह्मणीगमने
॥ नित्यं पंचमहायज्ञाकरणे भोजनंचेत्
३६०ब्राह्मणस्यप्रेतकर्म अकृत्वाधनग्रहणेपाप

२५ अमायां त्रिंशद्विप्रा भोजिताः
२५० श्रावणामायां त्रिंशद्विप्रा भोजिताः
२५० भाद्रामायां त्रिंशद्विप्राभोजिताः
२१०० आश्विनेअमायां त्रिंशद्विप्राभोजिताः
१० गंगायां मत्यक्षगोदानंकृतं
१२५ प्रयागेमकरेसपादलक्षंगायत्रीजपः कृतः
६५ कार्तिके पुष्करस्नानं मासं
४० पर्यंतं ५० ब्राह्मणभोजनं तत्र२५
१० तिलपात्र दाने १२
९॥ क्षुधित गोभ्यो भारशतकंदाने
२७० सप्तगोदावरी स्नानं
३० मासगोमूत्रयावकभक्षणं कुरुक्षेत्रे रविग्रहे सुवर्ण दानं

१८० वेदनिंदायां
३ स्वस्रसुताविवाहत्यागेपिकुर्यात्
१ भार्यामुखमैथुने
१ गोशकटयाने मैथुने
१२ भूमिकन्यानृते
४ सापिंडीश्राद्धभोजने
२ मलिनमासिके भोजिताः
१५ सवर्णे दुष्टाभार्या रते
९० अज्ञानतः स्त्रीवधे
१ मार्जार नकुल गोधा मंडूक हनने
१ फलवृक्ष छेदने
५ महापापे मिथ्याभिशंसने
१ क्रोधाद्भार्याऽगम्या इत्युक्त्वापुनर्गमने
३ विप्रवधयुक्त शपथे
३० शरणागतभार्यादि त्यागे
१४४ चतुर्वर्ष अनाश्रमित्वे
२८ कवकाद्यष्टाविंशति भक्षणे
४ मत्स्यादि भक्षणे

अथकाचिद्ब्राह्मणीप्रार्थनां विधायपूर्ववद्भूतेममकर्मविवेकंकुरुत मयाभर्तृव्यतिक्रमःकृतः षण्मासंतत्समीपेनगताक्रोधाविष्टा १ एकदाकामतोब्राह्मणपरपुरुषगमनं कृतं ॥ २ ॥ एकदाबलाद्ब्राह्मणेन संगता ॥ ३ ॥ एकदा अपरब्राह्मणगर्भोजातः ॥ ४ ॥ एकदा वैश्येनसंगता ॥ ५ ॥ एकदाक्षत्रियेणसंगता ॥ ६ ॥ ताभ्यांगर्भश्चवारद्वयंजातः ॥ ७ ॥ एकदामार्गेबलात्शूद्रेणसंगता ॥ ८ ॥ तत्रगर्भश्चजातः ॥ ९ ॥ एकदाविप्रेणालिंगितातत्रार्द्धं मैथुनमपिजातं ॥ १० ॥ एकदाक्षत्रियेणवैश्येन शूद्रेणचस्पृष्टाआलिंगिता॥ ११॥ एकदागर्भवत्यकालेनीचेनरमिता ॥ १२॥ बहुवारंकृशरपाकपूपसंयावपायसशष्कुलिपाकं विधायगुप्ततया भुक्तं पति पुत्रादिभ्यो रहस्येनैव ॥ १३ ॥ श्वश्रूंप्रतिबहुवारंकलहःकृतः ॥ १४ ॥ कलहे

पतिविषये हस्तद्वयेनचपेटाप्रहारः कृतः ॥ १५ ॥ कार्तिके प्रातः स्नानंकृतं ॥ १६ ॥ माघेप्रातःस्नाता ॥ १७ ॥ वैशाखमासंप्रातः स्नाता ॥ १८ ॥ पंचदशयोजनाद्गंगास्नानार्थं पादचारेणगता ॥ १९ ॥ ब्राह्मणोभिक्षार्थी मद्गृहात्कदापिरिक्तोनगतः ॥ २० ॥ भर्तृमरणानंतरंपराकव्रतंकृतं ॥ २१ ॥ एकदागोदानद्वयंकृतं॥ २२॥ श्रावणेभाद्रपदेच फलाहारेण मासद्वयंनीतं ॥ २३ ॥ एकवारंचांद्रायणव्रतंकृतं विधवावस्थायां ॥ २४ ॥ एकसंवत्सरंकृच्छ्रैर्नीतं ॥ २५॥ एकदापंचयोजनं पादचारेणगत्वानर्मदास्नानं कृतं २६॥ भगवन्मंदिरे रंगवल्लीपंचविंशतिसहस्रंरंगवल्लीकृता ॥ २७ ॥ श्रावणमासे पंचसहस्रैःशतपत्र जातिमालत्यादि पुष्पैर्नित्यं पुष्पमडपंमासपर्यंतंकारितंप्रत्यहंघृताक्तषष्टीसंख्याकदीपज्वालनंचकारितं प्रत्यहंतथाचतुर्विंशति२४ ब्राह्मणभोजनंचकारितं ॥२८॥ एकदामयासर्वगृहवस्तुजातं विक्रयंकृत्वासकलपांथजलपानार्थं वापीकारितामार्गे ॥२९ ॥ पतिमरणात्पंचाब्दपूर्वंतदाज्ञाकदापि नोल्लंघिता ॥ ३० ॥ मरणसमयेस्नेहेनहठेनचचितिमारूढाभर्तुः परंतुपुनर्भयात् अग्नेर्भ्रष्टाजाता ॥ ३१ ॥ एकदामहादुर्भिक्षेत्रिंशद्वयोमनुष्येभ्यो अन्नभोजनपर्याप्तंमासषट्कं दत्तं ॥ ३२ ॥ श्रीमद्भागवतसप्ताहपक्षश्चकारितः ॥ ३३ ॥ यवनीवेश्या गमनं च कृतं ॥ ३४ ॥ इदानीं प्रतिपक्षं शुक्ले कृष्णेचैकादशीव्रतनियमः स्वीकृतः इतिमेकर्मणां विवेकः ॥ अथविवेकः षण्मासं भर्तृव्यतिक्रमेत्रिंशत्कृच्छ्राः तत्रकार्तिकस्नाने २ ॥ सार्द्धद्वयंकृच्छ्रा माघे वैशाखेचमिलित्वासार्द्धसप्तकंकृच्छ्राः तथापंचदशयोजनतोगंगास्नाने सार्द्धद्वाविंशतिकृच्छ्रामिलित्वा ३० त्रिंशत्कृच्छ्राजाताःसमताविधेया ॥ १ ॥ कामतो ब्राह्मणपरपुरुषगमने पराकव्रतं समतांनेयं ॥२॥ ब्राह्मणेनबलाद्भोगे पापेगोदानद्वयंसमानं कृतं

कृच्छ्रद्वय रूपं ॥ ३ ॥ ब्राह्मणगर्भे पापंदशकृच्छ्रमितं तत्रश्रावणे भाद्रपदेफलाहारेणवर्तनं समतांगतं ॥ ४ ॥ क्षत्रियवैश्यगर्भोत्पत्तौशूद्रेणबलात्कारभोगेच चांद्रायणं संवत्सरंकृच्छ्रैर्नीतं पंचदश योजनतः पादचारेणनर्मदास्नानं पंचदशकृच्छ्रात्मकं वर्षेत्रिंशत्कृच्छ्राः चांद्रायणेत्रयः कृच्छ्राः मिलित्वा अष्टचत्वारिंशत्कृच्छ्राः क्षत्रियगर्भे १६ कृच्छ्रावैश्यगर्भे२८ कृच्छ्राः शूद्रेणबलात्कारे चत्वारः कृच्छ्रामिलिता अष्टचत्वारिंशतत्कृच्छ्राः तुल्यतयासंकल्पनीयाः॥५ ॥विप्रेणार्द्धमैथुने बलात्कारकृते कृच्छ्रं तत्रभगवन्मंदिरेरंगवल्ली पंचविंशतिसहस्रं कृतं तदपिकृच्छ्रफलं समतांज्ञेयं एवंक्षत्रियेणापिपूर्ववत्स्पर्शे कृच्छ्रद्वयं वैश्यस्पर्शे कृच्छ्रत्रयं शूद्रेण स्पर्शेपराकद्वयंतत्रकृच्छ्रपंचकंस्पर्शोऽर्धमैथुनं सर्वमेलनेदशकृच्छ्राः तदर्थं श्रावणमासेप्रत्यहं कृतंपंचसहस्रपुष्पैर्मंडपंतत्र षट्कृच्छ्राः घृतदीपषष्टि संख्याकज्वालनेमासे चतुःकृच्छ्राः मिलितादश कृच्छ्राजातासमतांविधेया ७ बहुवारंगुप्तयाकृशरापूपादि भोजनेविंशतिकृच्छ्राः वापीकरणे ७२० कृच्छ्राः पुण्यंविप्रात्गर्भवधे १८० क्षत्रियादगर्भवधे १३५ कृच्छ्राः वैश्यजगर्भवधेनवती ९० कृच्छ्राःशूद्रजगर्भवधे४५ पंचचत्वारिंशत्कृच्छ्राः चितिभ्रंशंकृच्छ्रं १ नीचाभिगमनेसकृद्वारेदशकृच्छ्राशूद्रगर्भे ३६० मिलिताः पुष्पविमानकरणेप्रत्यहं मासं चतुर्विंशतिद्विजभोजने ६० कृच्छ्रामहादुर्भिक्षेत्रिंशन्नवेभ्योनित्यंभोजनदाने षण्मासे चत्वारिंशदुत्तरं चतुर्दशशतकृच्छ्राः १४४० मरणात्पंचाब्दं पूर्वंतदाज्ञाकदापिनलंघनेचपेटादिप्रहारागतदोषनाशः ८ पापे८४१ कृच्छ्राजातापुण्येतुविंशत्यधिकद्वाविंशतिशतं श्रीमद्भागवतपारायणे५०० कृच्छ्राः पुण्येनपापनिरसनं विधायपरीक्षाध्यायं विचार्यस्वांतःकरणेशुद्धिपरीक्षेकर्तव्ये इतिविवेकः इतिश्रीकर्मविवेकेः गीता

रामनिर्मितेब्राह्मणी उदाहरणप्रकरणम् ॥ ॥ कश्चित्क्षत्रियः प्रार्थनांविधायब्रूतेमयापिकर्मविवेकः कर्तव्यःमयाएकदाक्षत्रियो हतः १ तथावैश्यहननंचजातं मार्गेएकदाशतसंख्याकमणपरिमाणं धान्यहरणं कृतं ३ कूपहरणं कृतं ४ अश्वहरणंचकृतं ५ एकदाशतद्वयं रूप्यंवैश्यस्यहृतं ६ एकदापरकीयभूम्यपहारःकृतः७ गोहरणंचकृतं ८ महिषीहरणंचकृतं ९ बलिवर्दहरणंचकृतं १० उत्सृष्टवृषभेनकृषिःकृता ११ एकदारात्रौचौर्यंगतेनवैश्यगृहं गुड कार्पासघृतलवणपक्वान्नं औषधतैलशय्यावस्त्रउपानह कांस्याय स्ताम्रशीसशंखंचहृतं १२ कपिलागौर्हतागृहेस्तिनित्यंसेवाक्रियते ॥ १३॥ एकस्यब्राह्मणस्यभूमिःपूर्वैर्दत्ताहृतावर्षभोज्यान्नोत्पादिका ॥ १४॥ एकदाब्राह्मणस्यसर्वस्वंरात्रौचौरैर्हृतं मयायुद्धंकृत्वापुनरादायदापितं ॥ १५॥ शतंगावोमध्यान्हेतृषार्ता चौरैर्धाविताभोजिताः ॥१६॥जलपानेमुक्ता पुनरेकदामध्यान्हे उद्याने॥ दुर्गमार्गेसभार्यं सद्रव्यंब्राह्मणंलुंठितुंचप्रवृत्तेभ्यश्चौरेभ्ययुद्धंकृत्वामुक्तिर्विधत्ता ॥ १७॥ पुनर्दैववशान्ममराज्यंप्राप्तं तथामया दशब्राह्मणेभ्योसंवत्सरभुक्तिपर्याप्तं सकुटंबेभ्योभूमिदानं कृतं ॥१८॥एकदानीतिवैपरीत्येनअदंड्येदंडोदत्तःदंड्यस्तुमुक्तः।१९॥ अविचार्य सहसाकृतः कुरुक्षेत्रेसूर्यग्रहणेहस्तिदानं ॥ २१॥ पंचाश्वदानं॥ २२॥ शतंगाश्च ॥ २३॥ एकदाप्रयागेसहस्रब्राह्मण भोजन विधिःकृतः ॥ २४ ॥ सप्ताहयज्ञोभागवतस्यकारितः ॥२५॥ पोषितगवाकृषिःकारिता ॥ २६॥ एकदाचांडालीपुष्कसीव्याधपत्नीगमनं कृतं अनिच्छतीनां ॥ २७॥ लोहहरणंकृतं ॥ २८॥ ताम्रहरणं कृतं ॥ २९ ॥ शृगालसर्पगोधाऊलूकवायस मयूखरचकोरहननंकृतं ॥ ३० ॥ मर्कटउष्ट्रश्चहतः ॥ ३० ॥ सामान्यविषयेऽदंड्येदंडोदत्तः ॥ ३२॥ दंडयश्चमुक्तः ॥ ३३॥ यु

धिपलायनंकृतं ॥ ३४ दुर्भिक्षे १ द्विजाभोजिताः॥ ३५॥ निक्षेपा
हारोब्राह्मणस्यकृतः॥३३॥गजहरणंकृतं ॥ ३७॥ तिलहरणंकृतं
॥३८॥ घृतदुग्धहरणंचकृतं॥६९सर्वरसहरणं कृतं ॥ ४० ॥ दार
व्यतिक्रमः ॥ ४१ ॥ शैलूषीरजकीचर्मोपजीवनीगमनंकृतं
॥४२॥दारव्यतिक्रमंकृत्वावृषल्यांजनितापत्यः॥४३॥वैश्यपत्नीग
मने॥४४॥शूद्रागमनं।४५॥ब्राह्मणकन्यादूषीभूत्वागमनंकृतं।४६।
कन्याविवाहेविघ्नंकृतंसजातिविषये।४७नदीसंगमहरणंकृतं।४८
कृष्णाजिनविक्रयःकृतः॥४९॥मातृस्वसृगमनंकृतं॥५०॥मातुलसु
तागमनंकृतं॥५१॥ मातुलानीगमनंकृतं ॥ ५२॥स्नुषागमनंकृतं
॥५३॥क्षत्रियागमनंकृतं।५४॥श्वश्रूगमनंकृतं॥५५॥पितृव्यभार्या
गमनं कृतं ॥ ५६ ॥ मातृस्वस्त्रेयीगमनं कृतं ॥५७॥ धात्रीगमनं
कृतं ॥ ५८ ॥ पितृव्यतनयागमनं कृतं ॥ ५९ ॥ समानविषये
कन्यादूषी ॥ ६० ॥ दुर्वृत्ताभार्याहता ॥ ६१ ॥ सवर्णेदुष्टाभार्याह
ता ॥ ६२ ॥ क्षत्रियाऽज्ञातवधः ॥ ६३ ॥ खराजमेषहतिः कृता ॥
॥ ६४ ॥ अश्वहननं कृतं ॥ ६५ ॥ शृगालहननं ॥ ६६॥ व्याघ्रहन
नं ॥ ६७॥ वराहहननं ॥ ६८ ॥ क्रोधादगम्या भार्याभुक्तापुनर्ग
मनं कृतं ॥ ६९ ॥ मिथ्याभिशंसने ॥ ७० ॥ अज्ञातरजस्वलाभा
र्यागमनं जातं ॥ ७१ ॥ वेश्यागमनं जातं ॥ ७२ ॥ षण्मासोत्तरं
गर्भिणीगमनं जातं।७३॥इतिपापानि॥अथपुण्याः॥ब्राह्मणस्यसर्व
स्वंरात्रौ चौरैर्हृतं मयायुद्धं कृत्वापुनरादायदापितं ॥ १ ॥ गोशतं
तृषार्त्तंज्येष्ठेमध्यान्हे जलोपरिमोचितं ॥ २ ॥ स्त्रीधनवस्त्रसमेतो
द्विजोलुंठकेभ्योमारणाल्लुंठनाच्चमुक्तः ॥ ३ ॥ दशभ्योद्विजेभ्योया
वद्गृहव्ययपर्याप्ताभूमिर्दत्ता ॥ ४ ॥ कुरुक्षेत्रेरविग्रहे गजदानंदत्तं
॥ ५ ॥ पंचाश्वदानं दत्तं ॥६॥ प्रयागेमकरेर्कैसहस्त्रंद्विजाभोजिताः
॥ ७ ॥ सप्ताहश्चकारितः ॥ ८ ॥ इति पुण्यानि ॥ ७ ॥ अथवि

वेकः ५ क्षत्रियहनने २ वैश्यहनने १० धान्य ४० मणहरणे २२ पुनरादानेचतुर्गुणं कूपहरणे३६० पुनरदानेचतुर्गुणं अश्वहरणे३ कृच्छ्रा अदाने चतुर्गणं १२ वैश्यस्यद्विशतरूप्यहरणे २७० भूमिहरणेक्षत्रियस्य १२ गोहरणे ४ महिषीहरणे १२० वृषभहरणे उत्सृष्ठवृषभेनकृषिकरणेच ३२ वैश्यगृहेगुडादिषोडशवस्तुहरणे ८ कपिलागोहरणे ३६००ब्राह्मणायदत्तापूर्वभूमिहरणे३६० नीतिवैपरित्येनादंड्येदंडोदत्तः १२ दंड्योमुक्तश्च८ योषित्गवाकृषिकृता ६ चांडालीपुष्कसीव्याधपत्नीरमिता २ अनेकस्त्रीगमनं कृतं ४ लोहहरणं कृतं ८ ताम्रहरणं कृतं २ शृगालसर्पगोधाउलूकवायसमयूरखरचकोरहननं कृतं २ मर्कटउष्ट्रौहतौ १ सामान्यविषयेऽदंड्येदंडोदतः दंड्यस्तुमुक्तः ६१२० ॥ ३० युधिपलायनं कृतं दुर्भिक्षे ५१ द्विजाभोजिता २७ ब्राह्मणस्यनिक्षेपापहारः कृतः२२ ॥ गजहरणं कृतं ११॥ तिलहरणं कृतं २ घृतदुग्धहरणं सर्वरसहरणं १५ दारव्यतिक्रमः १६ शैलूषीरजकीचर्मोपजीविनीव्याधीगमनं ज्ञानतः कृतं१०८ वृषल्यांजनितापत्यः१ वैश्यपत्नीगमनं कृतं॥ शूद्राईगमनं कृतं ३० ब्राह्मणकन्यादूषीभूत्वागमनं कृतं ४ स्वजातौकन्याविवाहे विघ्नं कृतं १ नदीसंगमहरणं कृतं ४५ कृष्णाजिनविक्रयकृतः ३ मातृस्वसृगमनं कृतं २ मातुलसुतागमनंकृतं ४ मातुलानीगमनंकृतं २२॥ स्नुषागमनं कृतं २५॥ क्षत्रियागमनं ६१० ॥ मिथ्याभिशंसने ७० अज्ञातरजस्वलाभार्यागमने७१वेश्यागमने७२षण्मासोत्तरंगर्भिणीगमने ७३

| पापकृच्छ्राः | अथपुण्य कृच्छ्राः |
|---|---|
| ३ श्वश्रूगमनं कृतं | ३६० ब्राह्मणसर्वस्व दापने |
| ३ पितृव्यभार्यागमनं | ३००० तृषार्त गोशतमोचने |
| २ मातृस्वस्रेयीगमनं | १०८० धनस्त्रीयुतद्विजमोचने चौरेभ्यः |
| २ धातृगमनं कृतं | ३६०० दरिद्रद्विजेभ्यो भूदाने |

३ पितृव्य तनया गमनं
१ समानविषये कन्यादूषीभूत्वा गमनंकृतं
१ दुर्वृतभार्या हताधेनुदा
४५ क्षत्रिया अज्ञा तवधे खराजभेषहतिकाकृता
। अश्वहननं कृतंवस्त्रदानं
१ व्याघ्रहननं कृतं
॥ वराह हननं कृतं
॥। क्रोधाद्भार्यामगम्यात्वयुक्ता पुनर्गमनंकृतं
१ मिथ्याभिशंसने
२ अज्ञातरजस्वलाभार्यागमने
२ यवनी वेश्यागमने
२ षण्मासोतरं गर्भिणी भार्यागमने

६१२०॥ ७०। ६१०।

सर्वमेलेन जातं ६८०१ पापकृच्छ्राः

१०००००० कुरुक्षेत्रे रविग्रहे गजदाने
५००० पंचाश्वदाने फलं
८३० प्रयागे सहस्रद्विज भोजने
२५०० भागवत सप्ताहे
१००१६३७०पुण्यैः पापानि संशोध्यांतःकरणं परीक्षेपेत

इतिश्री कर्मविवेके गीता रामनिर्मिते क्षत्रियप्रकरणं

अथक्षत्रिया॥काचित्क्षत्रिया पूर्ववत्प्रार्थनां विधायब्रूतेममकर्मविवेकंकुरुत मयामासद्वयं क्रोधार्त्तया भर्तृव्यतिक्रमः कृतः॥ एकवार अनिच्छायांसजाति विषयेगमनं जातं ॥ १ ॥ एकवारं इच्छया सजातिगमनं जातं एकदावैश्येन संगता ॥ ३ ॥ एकदाशूद्रेण संगता बहुवारंगूढयाकृसरसंयावापूपशष्कुलीपायसभक्षणं पतिपुत्राद्रहस्येनभुक्तं ॥ ५ ॥ स्वजातिविषयेजगर्भपातकृतः ॥ ६ ॥ एकदाश्वश्र्वाकलहः कृतः ॥७॥ एकदापतिंप्रत्युक्ता॥ ८॥एकदा ब्राह्मणेनसंगता ॥ ९ ॥ तज्जातगर्भोहतः ॥ १० ॥ अथपुण्यानि वर्षद्वयंकार्तिकस्नानं कृतं ॥ १ ॥ एकदापंचाशद्योजनं पादचारेणगत्वा कृष्णवेणीसंगमेस्नातं॥२॥ एकदादशयोजनंगत्वा पादचारेणताम्रपर्णी स्नानं कृतं ॥३॥ कुरुक्षेत्रयात्रा कृता विंशतियोजनात् ॥ ४ ॥ तत्ररविग्रहे माषदशकं सुवर्णदानं कृतं ॥ ५ ॥ भोजनसमये कदापिरिक्तोऽभ्यागतोनगतः ॥ ६ ॥ एकदागृहेगोदानं कृतं ॥ ७ ॥ एकदावश्यौषधदानेन पतिर्वश्ये कृतः ॥ ८ ॥ पतिमरणानंतरं द्वादशवर्षं वैधव्यंसम्यक् पाळितं शीलरक्षणंकृतं॥ ९ ॥

एकदापंचाशद्द्विजा भोजिताः॥ १० ॥एकादशी व्रतंद्विवर्षपर्यं तं कृतं ॥ ११ ॥ ममकर्मविवेकंकुरुत॥मासद्वयं भर्तृव्यतिक्रमेपं चकृच्छ्राः तत्रद्विवारं कार्तिकस्नानं तुलसीदीपदानं समंविधीय तां॥१॥ अनिच्छया सजातिगमने प्रत्यक्षगोदानं तुल्यं॥२॥इच्छा सजातिगमनेकृच्छ्रत्रयं शूद्रगमनेचकृच्छ्रसप्तकं मिलितादशकृ च्छ्राः तदर्थंताम्रपर्णीस्नानंदशकृच्छ्रात्मकंसमंविधीयतां॥३॥ वैश्य संगमेकृच्छ्रचतुष्टयं गुप्ततयापायसापूपादिभक्षणेविंशतिकृच्छ्राः गर्भवधे १३५ पंचत्रिंशदुत्तरंशतंकृच्छ्राः सकृत्श्वश्रूकलहेकृच्छ्रं मिलितेषष्ट्युत्तरशतंकृच्छ्राः तदर्थंपंचाशद्योजनतः कृष्णावे णीसंगमस्नानंशतकृच्छ्रफलं विंशतियोजनात्कुरु क्षेत्रयात्राष ष्टीकृच्छ्रफलाउभयोः साम्यंविधीयतां ॥ ४ ॥ पतिविषये वश्योषधदाने पतिवशकरणेषष्ट्युत्तरशतत्रयंकृच्छ्राः मरणानं तरंद्वादशवर्षवैधव्यपालनेपिषष्ट्युत्तरशतंकृच्छ्राः तुल्यताविधेया ॥ ५ ॥ ब्राह्मणजातगर्भवधेषष्ट्युत्तरशतत्रयंकृच्छ्राः पत्याकल हे पूर्णेपिनवतिकृच्छ्राः अतिथिपूजनेनगताविधीयतां द्विवर्षे एकादशीव्रतेअशीत्युत्तरंचतुःशतंकृच्छ्राः ब्राह्मणजातगर्भवधे तुल्यताविधीयतां ॥ ७॥ रविग्रहेसुवर्णामितहेमदानेकोटिकृच्छ्राः परलोके भोग्याः यद्दातद्दानमपिसर्वपापविनाशनपूर्वकहरिभक्ति वृद्धयर्थंसंकल्पंकृत्वापरीक्षाध्यायेअंतःकरणंपरीक्षणीयं॥ इतिश्री कर्मविवेकेगीतारामनिर्मितेक्षत्रियोदाहरणंसमाप्तं॥अथवैश्योदाह णं कश्चिद्वैश्यः पूर्ववत्प्रार्थनां विधायपूर्ववद्ब्रूते ममकर्मविवेकंब्रूत मयासजातीयभूमिहरणंकृतं॥ १ ॥ निक्षेपापहारःकृतः ॥ २ ॥ तिलहरणंकृतं ॥ ३ ॥ रसापहारः कृतः ॥ ४ ॥ घृतदुग्धह रणंकृतं ॥ ५ ॥ लवणगुडापहारः कृतः॥ ६ ॥ मृगछालावि क्रयः कृतः ॥ ७ ॥ वक्रतुलाधारणं कृतं ॥ ८ ॥ विषसंस्कारः कृतः

॥ ९ ॥ प्राणिविक्रयः कृतोभ्यासेन ॥ १० ॥ मानतुलान्नृतं जातं ॥ ११ ॥ सुतविक्रयः कृतः ॥ १२ ॥ सुताविक्रयः कृतः ॥ १३ ॥ मातृस्वस्त्रेयीगमनं कृतं ॥ १४ ॥ मातुलसुतागमनं कृतं ॥ १५ ॥ मातुलानीगमनं कृतं ॥ १६ ॥ स्नुषागमनं अभ्यासेन ॥ १७ ॥ वैश्यगमनं ॥ १८ ॥ श्वश्रूगमनं कृतं ॥ १९ ॥ गर्भिणीगौरुद्धाम्नता ॥ २० ॥ कपिलावाहनं कृषिकर्मणि ॥२१॥ दारव्यतिक्रमः॥२२॥ राजगामीमैथुनं कृतं ॥ २३ ॥ पितृव्यपत्नीगमनं ॥ २४ ॥ मातृभगिनीगमनं ॥ २५ ॥ धात्रीगमनं ॥ २६ ॥ पितृव्यतनयागमनं ॥ २७ ॥ सजातिविषयेकन्यादूषी ॥ २८ ॥ दुर्वृत्ताभार्यायवनगाहता ॥ २९ ॥ सवर्णेदुष्टाभार्याहता ॥ ३० ॥ अज्ञानतोवैश्यवधो जातः ॥ ३१ ॥ श्वानसर्पमार्जारनकुलहननं जातं ॥ ३२ ॥ कूटव्यवहारः कृतः ॥ ३३ ॥ क्रोधात्भार्यामगम्यात्वमुक्त्वापुनर्गमनंकृतं ॥ ३४ ॥ मृषाविप्रवधशपथः कृतः ॥ ३४ ॥ शरणागतस्य भार्यायावात्यागः ॥ ३५ ॥ अनाश्रमीचतुर्वर्षं ॥ ३६ ॥ ब्राह्मणकन्यादूषी भूत्वातद्गमनं कृतं ॥ ३७ ॥ भूमिकन्यानृते ॥ ३८ ॥ तत्तद्वस्तुमिश्रणंकृत्वाविक्रीतं ॥ ३९ ॥ अपण्यविक्रयः कृतः ॥ ४० ॥ इति मेपापानि॥अथपुण्पाः मयासूर्यग्रहे सुवर्णधेनु दानं कुरुक्षेत्रे ऽन्यतीर्थे वाकृतं ॥ १ ॥ मासंमहादुर्भिक्षे २५ पंचविंशतिविप्रेभ्योमनुष्यमात्रेभ्योवान्नदानं कृतं ॥ २ ॥ संवत्सरं काश्यांपंचविंशतिद्विजेभ्यो भोजनं नित्यंदत्तं ॥ ३ ॥ वर्षमात्रंपंचाशद्द्विजेभ्यो नित्यंनवेभ्योदत्तं आमान्नं ॥ ४ ॥ निर्जलेदेशे ज्येष्ठेमासद्वये प्रपायांअखंडजलदानं दत्तं ॥ ५ ॥ श्रीमद्भागवतसप्ताहःकारितः ॥ ६ ॥ तीर्थेमंदिरे भगवतः सहस्रदीपदानंकार्तिकेकारितं ॥ ७ ॥ मासपर्यंतं विष्णुमंदिरे पंचसहस्रपुष्पैर्नित्यंपुष्पमंडपंकारितं ॥ ८ ॥ यथोक्तदक्षिणादानेनश्रावणे एव विष्णोः स

हस्त्रनाम्नांद्वादशपाठाः प्रत्यहंब्राह्मणात्कारिताः ॥ ९ ॥ सपादल
क्षतुलसीपूजनं चतुर्मास्येकारितं ॥१०॥ मासंगीतापाठात्प्रत्यहमे
कैकंकारितं ॥ ११॥ काश्यांदेवालयेलक्षवर्ती ज्वालनं कृतं ॥ १२॥
द्विशतयोजनेसेतुयात्रापादचारेणकृता ॥ १३ ॥ अतिथिपूजा
नित्यं कृतादशवर्षं ॥ १४ ॥ पर्वणि ३०त्रिंशद्विजाभोजिताः
॥ १५ ॥ आश्विनेऽमायांद्वादशद्विजाभोजिताः ॥ १६ ॥ स्वहस्ते
नतुलस्यवचयो नित्यार्चनंसहस्त्रंचतुर्मास्ये एकदाकृतं॥१७॥ भा
गवतश्रवणं नित्यं ॥ १८ ॥ अथविवेकः निक्षेपापहारे १८०
कृच्छ्राः रविग्रहे सुवर्णधेनुदानेसमाः

## वैश्यपापकृच्छ्राः

१८० भूमिहरणे कृच्छ्राः
७॥ तिलहरणे
९ रसापहारे
६ घृतदुग्धहरणे
२। लवणगुडापहारे
३० मृगछालविक्रये
१८० वक्रतुलाधारणे कृच्छ्राः
१८० विषसंस्कारे
६० प्राणिविक्रयेभ्यासे
३० मानतुलानृते
६ सुतविक्रयेषट्
३ सुताविक्रयेत्रयः
२ मातृस्वस्त्रेयी गमने द्वयं
२ मातुलसुतागमने
३ मातुलानी गमने
१९ स्नुषा गमने
१९ वेश्यागमने यवनी जातीये
१९ स्वश्रूगमने
१९ गर्भिणीगौरुद्धामृता
६ कपिलाक्रापिकरणे

१९ दारव्याति क्रमे
१८० राजगामीमैथुने
२ पितृव्य पत्नी गमने
२ मातृभगिनी गमने
२ धात्री गमने
१८० पितृव्य तनया गमने
४ सजाति विषये कन्या दूषीगमने
१९ सवर्ण दुष्टाभार्या हनने
२२॥ वैश्यस्त्री वधे
। यवनेरताभार्या हनने वस्त्रदानं कर्तव्यं
१ श्वानसर्प मार्जारनकुलहनने
३० सकृत्कूटव्यापारे
॥ क्रोधात् भार्या अगम्यात्व मुक्तापुनर्गमने
१ मृषा विप्रवधशपथे
३० भार्यात्यागे शरणागतत्यागेवा
३० अनाश्रमीवर्षाणि ४
३६० ब्राह्मण कन्या दूषीभूता गमने
१२ भूमि कन्यानृते
६८८
३३ लाक्षालवण मधुमांस तैलदधि क्षारघृत

तक्रचंदन वाससां विक्रये एकैकस्य चांद्रायणं
। यवने रताभार्या हननेपाद कृच्छं वस्त्रदा
नं कर्तव्यं
सर्वमेलनेएकसप्तत्युत्तरंसप्तशतंकृच्छ्राःजाताः
१७७१ प्राजापत्याः

## अथपुण्यकृच्छ्राःवैश्यस्य

४८० महादुर्भिक्षे नित्यं २५ मनुष्येभ्यो न्न दाने कृच्छ्राः
४३२० काश्यांवर्ष पर्यंतं २५ नित्यंपंचविंशति छात्रभोजने काश्यां षड्गुणेजाताः
७२०वर्षंपंचाशद्भ्योनित्यंआमान्नदानेकृच्छ्राः
२५० भागवतसप्ताहेकृच्छ्राः
१ दीप दाने कृच्छ्रम्
६ पुष्पमंडपे मासे षट्कृच्छ्राः
२७० नामावली १२ पाठेसंवत्सरे
३६० कृच्छ्राः तुर्यांशेद्विजं प्रति गतेकृच्छ्राः शिष्टाः
२५० सपादलक्षं तुलस्यर्चने चातुर्मास्ये सार्द्ध द्विशतं कृच्छ्राः
३ मासंगीता पाठे प्रत्यहंकृच्छ्र त्रयंसर्वे
६ काश्यां देवालये लक्षवर्ती ज्वालने षट्कृच्छ्राः
६०० द्विशत योजनेपादचारेण सेतुयात्रा यां कृच्छ्रषट् शतं
३०० दशवर्षं नित्यमतिथिपूजने प्रो.
२५ त्रिंशद्विजभोजने पर्वणिकृते पंचविंशति कृच्छ्राः
१०० आश्विनेमायां द्वादश द्विजभोजने कृच्छ्रशतं
५० स्वहस्तेन तुलस्यवचयं कृत्वा नित्यंचातुर्मास्ये सहस्रार्चने पंचाशत्कृच्छ्राः
२५ भागवतकथा श्रवणे वर्षे पंचविंशाति कृच्छ्राः
७४०६

षड्ुतरंचतुःसप्ततिशतंकृच्छ्राजाताः ॥ तन्मध्यतः पापप्रायश्चित तुल्यकृच्छ्रैः निवृत्तिसंकल्पंविधायावशिष्टकृच्छ्रैःजन्मांतरीयाद्य निवृत्तिपूर्वकंहृदयशुद्धिंसंकल्पपरीक्षाध्यायेअंतःकरणंपरीक्षेतइ तिश्रीकर्मविवेकेगीतारामनिर्मितेवैश्योदाहरणं॥ अथवैश्यपत्नीउ दाहरणं काचिद्वैश्यपत्नीपूर्ववत्प्रार्थनांविधायममकर्मविवेकंकुरुत मयामासषट्कं भर्तृव्यतिक्रमः कोपेनकृतः॥१॥ एकवारंशूद्रेणसंग ता ॥ २ ॥ एकदावैश्येनसंगता ॥ ३ ॥ एकदाब्राह्मणेनसंगता ॥ ४ ॥ एकदाक्षत्रियेणसंगता ॥ ५ ॥ एकदागर्भपातःकृतः ॥ ६ ॥ अभ्यासेनवृथासंयावापूपशष्कुलीपायसकृशरादिभुक्तंगु प्तया ॥ ७ ॥ श्वश्रूप्रत्युक्ताबहुवारं ॥ ८ ॥ म्लेच्छेनसंगताएक वारं ॥ ९ ॥ एकदाअनिच्छयासजातिगमनंजातं॥१०॥ वश्यौ

षधंदत्वापतिर्वश्येकृतः ॥ ११ ॥ एकदापत्यावाकलहः कृतः ॥ १२ ॥ एकदासजातीयेबलात्कारेणस्पर्शोअर्धमैथुनंजातं १३ इतिपापानि ॥ अथपुण्यानि एकदामयागोदावरीस्नानंविंशतियोजनपादचारेणऽर्द्धवाहनेनार्धकृतं ॥ १ ॥ तथापंचयोजनाद्गत्वा कावेरीस्नानंपादचारेणकृतं ॥ २ ॥ एकदावर्षपर्यंतंयथोक्तविधिनावैतरणीव्रतंकृतं सोद्यापनंसजागरं ॥ ३ ॥ सोमवत्यांब्राह्मणभोजनंदशसंख्याकंकारितं ॥ ४ ॥ संवत्सरंपरकारितभागवतश्रवणं ॥ ५ ॥ स्वगृहेसप्ताहयज्ञः कारितः ॥ ६ ॥ परकीयकारितसप्ताहश्रवणंकृतं ॥ ७ ॥ मासंसहस्रनाम्नांपाठ १० दशकंकारितं ॥ ८ ॥ साक्षाद्गोदानंपर्वणिकृतं ॥ ९ ॥ विष्णुदीक्षागृहीतावैष्णवीजाता ॥ १० ॥ संवत्सरंअतिथिभोजनंकारितं ॥ ११ ॥ संवत्सरंगोग्रासोदत्तः ॥ १२ ॥ सोमवत्यांब्राह्मणायमाषमात्रंसुवर्णंदत्तं ॥ १३ ॥ इतिमेकर्माणि ॥ अथविवेकः मासषट्कंक्रोधेनभर्तृव्यतिक्रमेपंचदशकृच्छ्राः तन्निमित्तंगोदावरीस्नानंविंशतियोजनात्कृतंपं चदशकृच्छ्रफलंसमंविधीयतांयद्यपिविंशतियोजनात् त्रिंशत्कृच्छ्रफलंभवतितथापिअर्द्धमार्गगमनंवाहनेनकृतंनिष्फलंतदितिज्ञेयं ॥ १ ॥ शूद्रगमनेसप्तकृच्छ्राःपापंतच्चपंचयोजनात्कावेरीस्नाने ७॥ सार्धसप्तकंकृच्छ्राःतुल्यतांविधेया ॥ २ ॥ वैश्यसंगमेकृच्छ्रत्रयंश्वशुरसंगमेपंचदशकृच्छ्राः तदुभयंनित्यंवर्षप्रमाणं भागवतश्रवणेतुल्यताविधेयापुनर्नकुर्यामित्याशयश्चेत्शुध्यति ॥ ३ ॥ क्षत्रियेणसंगतातत्रकृच्छ्रत्रयंकार्तिकस्नानेनब्राह्मणाभोजनेनतुल्यताजाता ॥ ४ ॥ वैतरणीव्रतंकाम्यंपरलोकेफलंभोक्ष्यसि ॥ ५ ॥ गर्भपाते १८० कृच्छ्राःगर्भग्रहणेतु ४५ पंचचत्वारिंशत्तत्रभागवतसप्ताहयज्ञो विधीयतांसाम्येन ६ वृथागोप्यतयासं यावादिभक्षणोअभ्यासे २० कृच्छ्राः श्व

श्वाकलहे ४५ पंचचत्वारिंशतकृच्छ्राः म्लेछेनसंगतौ १८०
अशीत्युत्तरशतंकच्छ्राःअनिच्छयासजातिगमनेसार्द्धकृच्छ्रं॥१॥
तन्निवृत्त्यर्थं परकीयभागवतश्रवणं सप्ताहेनेसपादशतं कृच्छ्राः
१२५ सहस्रनाम्नांदशपाठेमासंतत्रकृच्छ्रपंचकं ॥ ५ ॥ प
र्वणिसाक्षाद्गोदानेदशकृच्छ्राः॥१०॥परकीयगृहेवर्षपर्यंतं भागवत
श्रवणे १२॥ सार्द्धद्वादशकृच्छ्राः तुल्यताविधेया॥७॥वश्यौषधदा
नेनपतिर्वश्येकृतः तत्रषष्ट्युत्तरशतत्रयंकृच्छ्राः तन्निवृत्यर्थंविष्णु
दीक्षागृहीता वैष्णवीजातातत्रषष्ट्युत्तरं शतत्रयंकृच्छ्राः तुल्यता
विधेयासंकल्पेन ॥ सजातीयेबलात्काररूपर्शेमैथुने अर्द्धमैथुनंकृ
च्छ्रं तन्निवृत्यर्थंसोमवत्यांब्राह्मणायमाषमितं सुवर्णदानंसमं वि
धीयतां॥९॥ पत्याकलहेनवतिकृच्छ्राः वर्षपर्यंतंअतिथिभोजने
३०त्रिंशत्कृच्छ्राः तथावर्षपर्यंतंगोग्रासे,पंचदशकृच्छ्राः तुल्यतान
भवति अतोवासुदेवपरायणाभवेतिशरणागतिमंत्रजपः प्रत्यहंक
र्तव्यः ततोपिपरीक्षाकर्तव्या सर्वत्रप्रायश्चितार्थं संकल्पितेपुण्ये
पुनर्नकुर्यामितिनियमनंकृतंचेत्शुद्ध्यति अन्यथाकुंजरशौचवत्
एवंसर्वत्र पूर्वोक्तेषुविज्ञेयं इतिश्रीकर्मविवेके गीतारामनिर्मिते वै
श्यस्त्री उदाहरणं न्यूनाधिकं प्रकरणांतरे द्रष्टव्यं ततोज्ञेयंच उदा
हरणंतरात्॥अथशूद्रोदाहरणं॥कश्चित्शूद्रःपूर्ववत्प्रार्थनां विधाय
ब्रूतेममकर्मविवेकं कुरुत मयापरकीयभूमिहरणं कृतं ॥१॥ एक
दानिक्षेपापहारःकृतः ॥२॥ एकदानरापहारःकृत॥३॥ एकदा
तिलहरणं कृतं ॥४॥ घृतदुग्धरसापहारःकृतः ॥ ५ ॥ उत्सृष्ट
वृषेनकृषिःकृता ॥ ६ ॥ कपिलायोजिता ॥ ७ ॥ गर्भिणीगौर्ह
लेयोजिता ॥ ८ ॥ एकदायष्ट्यागोहननेक्षेत्रगताम्रता ॥ ९ ॥
एकदाक्षेत्रगतः क्षुद्रपशुर्हतोम्रतः ॥ १० ॥ एकदाब्राह्मणकन्या
दूषीभूत्वातद्गमनंकृतं॥११॥सवर्णेदुष्टाभार्याहताम्रता॥१२॥

फलवद्वृक्षच्छेदनं कृतं ॥ १४ ॥ भार्यात्यक्तानिर्दोषा ॥ १४ ॥ भूमिविषयेऽनृतसाक्षीकृता ॥ १५ ॥ गौःकपिलारक्षितागृहे ॥ १६ ॥ विप्रगोहरणंजातं ॥ १७ ॥ इतिमेपापानि अथपुण्यजातं॥मयावर्षत्रयं कार्त्तिकस्नानंकृतं ॥ १ ॥ वर्षदशकंसहस्रंजपप्रमाणंभजनं कृतं ॥ २ ॥ वर्षत्रयंशतसंख्यागोचारणं कृतंभक्त्या ॥ ३ ॥ पंचवारंपल्वलमग्नागौरुद्धृता ॥ ४॥ एकदामार्गेगच्छत् पंचाशद्योजनेपांथोब्राह्मणः चौरेभ्योरक्षितः ॥ ५ ॥ गोदानंप्रत्यक्षंस्वरूपतोरविग्रहे कृतं॥ ६ ॥ उत्तरायणेशतंद्विजाभोजिताः ॥ ७॥ एकदाउभयमुखीगौर्द्विजायदत्ता ॥ ८ ॥ बदरीनारायणयात्रावैश्येनसार्द्धंवेतनंगृहीत्वाकृता ॥ ९ ॥ गंगास्नानंस्वतंत्रेणाविंशतियोजने गत्वाकृतं ॥ १० ॥ योजने योजनद्वयेचगत्वाकुरुक्षेत्रस्थतीर्थेषु बहुवारंजनसमूहेस्नानंस्वातंत्र्येण कृतं ॥ ११ ॥ इतिमेकर्माणि अथविवेकः भूमिहरणेनवतिकृच्छ्राः निक्षेपापहारे नवतिकृच्छ्राःनरापहारेनवतिकृच्छ्राःषष्ट्यागोहननेपंचचत्वारिंशत्कृच्छ्राः गर्भिणीगौर्हले योजने द्वादशकृच्छ्राः भूम्यनृते द्वादशकृच्छ्राः ब्राह्मणगोहरणे द्वादशकृच्छ्रासवर्णे दुष्टाभार्याहनने पंचदशकृच्छ्राः उत्सृष्टवृषेणकृषिकरणे षट्कृच्छ्राः कपिलायोजने षट् कृच्छ्राः तिलहरणेचत्वारः कृच्छ्राः घृतदुग्धरसापहारेषट्कृच्छ्राः भार्यात्यागेकृच्छ्रत्रयं फलवद्वृक्षछेदनेकृच्छ्रं क्षुद्रपशुहननेकृच्छ्रंसर्वयोगेत्रिनवत्यधिकशतत्रयंकृच्छ्राः तन्निवारणायवर्षदशकंनित्यं सहस्रंस्मरणंविष्णोः षष्ट्युतरशतत्रयं कृच्छ्राः वर्षत्रयंकार्तिकस्नाने सार्द्धसप्तकृच्छ्राः वर्षत्रयंशतसंख्याकगोचारणेपंचविंशति कृच्छ्राः सर्वयोगेसार्द्धद्विनवत्युत्तरशतत्रयं कृच्छ्राः समाविधीयतां ॥ १ ॥ ब्राह्मणकन्यादूषी भूत्वातद्गमने ७२० विंशत्यधिकंसप्तशतंकृच्छ्राःमार्गेचोरगृहीतब्राह्मणमोचनेषष्ट्युतरंशतत्रयं कृच्छ्राः

३६० पुण्यंबदरीनारायण यात्रायां १५० सार्द्धशतं कृच्छ्राः स्वातंत्र्येणगंगास्नानेविंशतिः २० उत्तरायणेशतब्राह्मणभोजने अष्टौ कृच्छ्राः ८ ॥ पंचवारं पल्वलमग्नायागोरुद्धरणे ११२ कृच्छ्राद्वादशाधिकशतं संख्याकाः सर्वयोगेपंचाशदधिकषट्शतं कृच्छ्राजाताविनाश्यास्तु सप्ततिअधिका अतस्त्वयातन्निवृत्त्यर्थं पर्वणितीर्थेगत्वागोदानं स्वरूपतोविधेयं गोदानंतीर्थेकृतंदशगो दानफलंपर्वणिततोपिदशगुणं भवतीतिशतगोदानफलंभाविर विग्रहेपयस्विनी गोदानं सहस्त्रकोटिगोदानफलं तेनाभीष्टं संक ल्प्यतां कपिलापयःपाने ३६० षष्ट्युत्तरंशतत्रयं कृच्छ्राः पा पंतन्निवृत्त्यर्थं कृतंयतूउभयतोमुखीगोदानंतत्समविधीयतांषष्ट्यु तरशतत्रयंकृच्छ्राफलं इतिश्रीकर्मविवेकेगीतारामनिर्मिते शूद्र स्यकर्मविवेकः॥अथकश्चित् शूद्रापूर्ववत्प्रार्थनांविधायब्रूतेममकर्म विवेकंकुरुत मयाएकदागर्भपातः कृतः ॥ १ ॥ एकवारंअनिच्छ यासजातीयविषये गमनं ॥ २ ॥ एकवारंसकामंसजातिगमनं कृ तं ॥ ३ ॥ भर्तृव्यतिक्रमोद्विमासं ॥ ४ ॥ वृथाकृशरसंयावापूपपा यसंगुप्तयाभुक्तंबहुवारं ॥ ५ ॥ एकदावैश्येनरता ॥ ६ ॥ एकदाब्रा ह्मणेनसंगता ॥ ७ ॥ एकदाक्षत्रियेणसंगता ॥ ८ ॥ मार्जारनकुल गोधामंडूकहननं कृतं ॥ ९ ॥ इति पापानि अथपुण्याः माघस्ना नंद्विवारं कृतं मासपर्यंतं ॥ १ ॥ मयाग्रीष्मेप्रत्यहंदशपांथेभ्यस्त क्रदानंकृतं ॥ २ ॥ एकदाद्विजायगौर्दत्तापर्वणि ॥ ३ ॥ एकदावर्ष पर्यंतंद्वादश्यामेकद्विजभोजनंव्रतपूर्वकंकारितं पायसान्नेन ॥४ ॥ इतिमेपुण्याः अथविवेकः भर्तृव्यतिक्रमे मासद्वयेकृच्छ्र पंचकं तन्निवृत्त्यर्थं द्विवारंमाघस्नाने कृच्छ्रपंचकंसमंविधायतां ॥ १ ॥ इच्छयासजातिगमने कृच्छ्रत्रयं अनिछयागमनेसार्द्धकृच्छ्रं वृथा कृशरादिगुप्तभोजनेकृच्छ्रत्रयं वैश्येनगमने कृच्छ्रद्वयं सर्वयोगेकिं

चिन्यूनंदशकृच्छ्राः तन्निवृत्त्यर्थंपर्वणिगोदानं प्रत्यक्षंदशकृच्छ्रा
त्मकंसमंक्रियतां ॥ २॥ गर्भवधेसार्द्धद्वाविंशतिकृच्छ्राः क्षत्रियग
मनेसार्द्धकृच्छ्रत्रयं ब्राह्मणगमनेकृच्छ्रचतुष्टयं मार्जारादिचतुष्क
हननेकृच्छ्रंसर्वयोगेत्रिंशत्कृच्छ्राः तन्निवृत्त्यर्थंसंवत्सरैकादशीव्र
तंफलाहारेणचतुर्विंशतिकृच्छ्राः ब्राह्मणभोजने कृच्छ्राष्टकं मिलि
त्वाद्वात्रिंशत्कृच्छ्राः समंविधीयतां ॥ ३ ॥ अवशिष्टंग्रीष्मेमासद्वयं
दशपांथेभ्यो नित्यं तत्रदानं द्विशतकृच्छ्रफलंपरलोके भोग्यं
अवशिष्टपापप्रायश्चित्त विचारोवर्णांतर विचारप्रकरणे द्रष्टव्यः
सर्वविधं सर्वत्राप्यस्ति इतिश्रीकर्मविवेके शूद्रःकर्मविवेकप्र
करणं॥अथब्रह्मचारिणउदाहरणं ब्रह्मचारी पूर्ववत्प्रार्थनां विधा
यब्रूते ममकर्मविवेकं ब्रूतममस्वप्नेदशवारं रेतस्स्खलनं जातं काम
तः पंचवारं रेतस्खलनं जातं ॥ २ ॥ त्रिवारं स्त्रीसंगोजातः ॥ ३ ॥
एकवारं दिनेपर्वणि रजस्वलागमनंजातं ॥ ४ ॥ तदामेखलादंड
कमंडलुयज्ञोपवीतनाशोजातःदिनत्रयं ॥ ५ ॥ एकदाऽसद्भैक्ष्य
भोजनंभुक्तं अभ्युदितनिर्भुक्त दिवास्वापोजातोदिनत्रयं ॥ ६ ॥
नग्नस्त्रीदर्शनश्मशानमाक्रमणाश्वारोहणं गुर्वतिक्रमोजातः॥ ७ ॥
अग्निहोत्रविक्षेपोदिनत्रयंजातं सरीसृपवधश्चकृतः ॥ ८ ॥ मणि
वस्त्रगोदानंगृहीतं ॥ ९ ॥ मध्वादिभोजनंश्राद्धेचतुर्वारंकृतं १०
शूद्रान्नभोजनंएकदाजातं॥ १० ॥ इतिमेमापानि अथपुण्यानिगो
दावरीतीरेपंचवट्यांप्राजापत्यंव्रतंकृतं ॥ १॥ वृंदावनेचतुर्मासेनि
त्यसहस्रंतुलस्यर्चनंकृतं तथासहस्रसंख्याकंनित्यंगायत्रीजपःकृ
तोअयोध्यायां॥३॥नित्यनैमितकंस्नानमुभयत्रकृतं ।४।चांद्रायणं
पुष्करेकृतंप्रत्यक्षगोदानेत्रयंचकृतंकार्तिके॥५॥इतिपुण्यानि अथ
विवेकः ॥ दशवारंस्वप्नेरेतस्खलनेदशकृच्छ्रंपापंतच्चगोदावर्यांकृतं
प्राजापत्यंतीर्थेकृतंदशगुणमितिदशकृच्छ्राःसमंविधीयतां॥ १ ॥

पंचवारंकामकृतेस्खलने १५० सार्द्धशतंकृच्छ्राःत्रिवारंस्त्रीसंगेपा
तित्यंतत्राशीत्युत्तरंसहस्रंकृच्छ्राःदिनेपर्वणिरजस्वलागमनेषट्स
प्तत्युत्तरंशतत्रयंकथमितिचेत् परस्त्रीनिमित्तं ब्रह्मचारिणेषष्ट्यु
त्तरशतत्रयं रजस्वलाप्रयुक्तं कृच्छ्रपंचकं दिनप्रयुक्तंकृच्छ्रंपर्वप्रयु
क्तंदशकृच्छ्राः एतैर्मिलिताः३७६जातासर्वयोगेषडुत्तरषोडशशत
संख्याजाताः१६०६ ॥ तन्निमित्तं अयोध्यायां कृतंचातुर्मास्येगा
यत्रीजपतीर्थत्वाद्दशगुणं विंशत्युत्तरं शतकृच्छ्राः चातुर्मास्येकृत
त्वात् ततोपिदशगुणं द्वादशशतकृच्छ्राः तथापुष्करे कार्तिकेकृतं
चांद्रायणं त्रिकृच्छ्रात्मकं द्विवारंदशगुणेपूर्ववत् शतत्रयंकृच्छ्राः
नित्यनैमित्तिकस्नानेऽष्टौकृच्छ्राः चातुर्मास्येकृतत्वाद्दशगुणाअशी
तिकृच्छ्राः वृषोत्सर्गेत्रिशतकृच्छ्राः मिलिताजाता १६१०
समतां विधेया २ असद्भक्ष्यभोजने अभ्युदितनिर्भुक्तदिवा
स्वापेकृच्छ्र चतुष्टयं मेखलाजिनदंडकमंडलुयज्ञोपवीतनाशेकृ
च्छ्रपंचकं नग्नस्त्रीदर्शनश्मशानाश्रमणाश्वारोहणगुर्वतिक्रमे कृ
च्छ्रचतुष्टयं अग्निहोत्रलोपसरीसृपवधे दिनत्रयंषट्कृच्छ्राः मणि
वासोगोदान ग्रहणेकृच्छ्रं चतुः श्राद्धेमधुभोजने चत्वारः कृच्छ्राः
शूद्रान्नभोजने कृच्छ्रपंचकं सर्वयोगेएकोनत्रिंशत्कृच्छ्राः जाता
पापेतन्निमितं वृंदावने चातुर्मास्ये प्रत्यहंकृतं सहस्रतुलस्य
र्चनं ४८ अष्टचत्वारिंशत्कृच्छ्रास्तत्रतीर्थत्वाच्चातुर्मास्ये कृत
त्वाद्विवारं दशगुणंजातं ४८०० अष्टचत्वारिंशत्शतंकृच्छ्राः॥
शेषंपरलोकेभोग्यं संकल्प्यपरीक्षाप्रकरणेपरीक्ष्यं परंतुएता
दृशब्रह्मचारिणोलोके संग्रहस्तुनास्ति आश्रमप्रयुक्तलोकप्राप्ति
रपिनास्तिपरंत्वत्र भारतेविनिमयेन पुण्यं पापनाशार्थं संकल्प
ते चेत्परलोके नरकप्राप्तिर्नास्ति इतिब्रह्मचारिणःकर्मविवेकः॥वा
नप्रस्थंकलौनिषिद्धं॥अथसंन्यासिनांकर्मविवेकः॥कश्चिद्यतिरपि

पूर्ववत्प्रार्थनां विधायब्रूते ममकर्मविवेकं ब्रूत एकोहं ममैतेचत्वारः शिष्याः क्षत्रियोवैश्यः शूद्रःसंकरश्चसर्वेसंन्यासिनः कषायांबरधारिणः प्रथमंब्राह्मणोयतिःब्रूतेममकर्म विवेकं कुरुतममपार्श्वे वित्तमस्तिप्रायश्चितार्थं विवेके यद्यत्कर्त्तव्यं तद्ब्रूतदानपुण्यजपादिकं मयामासमेकंधनिनोवैश्यस्यगृहे नित्यंसघृतंसमिष्टं भुक्तं उष्णोदकेनस्नानं ॥ २ ॥ तैलाभ्यंगपूर्वकं ॥ ३ ॥ द्विवारंभोजनंदिने रात्रौ चसदाकृतं यस्मिन्दिनेसायंकालेऽव्यंजनादिकं नोर्वरितं दिनकृतं तदातत्काले एवपचनं कृतं ॥ ५ ॥ द्विवारंकामतोरेतःसेकः कृतः ॥ ६ ॥ एकदाश्रावणेग्रामांतरंकार्यवशाद्गतं ॥ ८ ॥ पंचग्रामान्लंघयित्वाषष्ठेवसतिःकृता ग्रामजनैः मार्गेप्रार्थितः अपिनस्थितः ॥ ९ ॥ एकदामेद्रक्षौरंचकृतं ॥ १० ॥ इदानींममपटे एवदास दासीयानं गावोभूरसादिकं संपन्नंतिष्ठति सर्वंतद्वन्मठे एव सिध्यति ॥ ११॥ इतिकर्माणि॥अथपुण्यानुष्ठानं मयादशवर्षे सहस्त्रसंख्याकं प्रत्यहंजपोगायत्र्याः कृतः ॥ १ ॥ काश्यांचंद्रग्रहे स्पर्शादिमोक्षपर्यंतं अखंडंगायत्रीजपः कृतः ॥ २ ॥ एवंकुरुक्षेत्रे रविग्रहे स्पर्शादिमोक्षपर्यंतं जपः कृतः ॥३ ॥ एकदाप्रयागेऽर्द्धोदये यावद्योग आसीत्तावत्प्राणायामाः कृताः त्रिंशत्कलाप्रमाणं पर्व आसीत्॥ ४ ॥ एकदासोमवत्यांकाश्यांपंचसहस्त्रसंख्यकःजपः कृतः ॥ ५ ॥ एकदाचांद्रायणंतप्तकच्छ्रं चकृतं ॥ ६ ॥ एकं संवत्सरं फलाहारेणनीतं ॥ ७॥ एकदामासे शतद्वयं प्रत्यहं प्राणायामाः कृताः॥ ८ ॥ चातुर्मास्येप्रत्यहं तुलसीसहस्त्रार्चनं ॥ ९ ॥ एकदाचातुर्मास्येसहस्त्रं गायत्रीजपः प्रत्यहंकृतः ॥ १० ॥ एकदाचातुर्मास्येनामावली पाठनवकं प्रत्यहंकृतं ॥ ११ ॥ संवत्सरेप्रत्यहंप्राणायामचतुः शतंनियमेनकृतं ॥ १२ ॥ इतिपुण्यजातं॥अथविवेकः हेम्निस्नेहदृष्टौब्रह्महत्यापापं तत्रषष्ट्युत्तरशतत्रयं कृच्छ्राः तन्निष्टं

त्यर्थं दशवर्षंकृतंप्रत्यहं गायत्रीसहस्त्रजपंसमंक्रियतां॥१॥हेमादि
द्रव्यग्रहे आत्महपापंतत्रविंशत्युत्तरं सप्तशतं कृच्छ्राः तदर्थंसंव
त्सरंप्रत्यहंचतुः शतंप्राणायामाः विंशत्युत्तरं शतंकृच्छ्राः विधी
यतां॥२॥नित्यंमिष्टान्नभोजने मासेत्रिंशत्कृच्छ्राःतन्निवृत्यर्थं का
श्यांकृते चांद्रायणं तप्तकृच्छ्रे त्रिंशत्कृच्छ्रसमं॥ ३ ॥ नित्यमुष्णो
दकस्नानेमासेत्रिंशत्कृच्छ्राः तदर्थं सोमवत्यांपंचसहस्त्रजपे त्रिंश
त्कृच्छ्रसमं ॥ ४ ॥ नित्यमभ्यंगेमासेत्रिंशत्कृच्छ्राः तदर्थंप्रत्यहं
मासेद्विशतप्राणायामाःसमं।५॥द्विकालभोजनेमासेनवतिकृच्छ्राः
तदर्थंचातुर्मास्येप्रत्यहंविष्णुसहस्त्रनाम्नांनामावलिनवपाठेनवति
कृच्छ्राःसमं ॥ ६ ॥ स्वयंपाककरणेपंचचत्वारिंशत्कृच्छ्राःचतुर्मा
सेप्रत्यहंतुलसीसहस्त्रार्चनेअष्टचत्वारिंशत्कृच्छ्राः मेढ्रक्षौरेकृच्छ्रं
चेत्युभयनिवृत्तिः संकल्प्या ॥७॥ द्विवाररेतःसेकेषट् वर्षायांग्रा
मषट्कलंघनेषट् इतिद्वादश तदर्थंकृतगायत्रीप्रत्यहेसहस्त्रजपंचतु
र्मासेसमर्थ्यतांद्वादशकृच्छ्रात्मकं ॥ ८ ॥एकान्नाशनेमासेषष्टिकृ
च्छ्रास्तदर्थंसंवत्सरंफलाहारेणनीतेपिषट्कृच्छ्रासमंविधीयतां ९
शेषंरविसोमग्रहेअर्द्धोदये चपुरश्चरणंउग्रतायांगतंउग्रादिपुण्ये
गणनाकुत्रापिनोक्ताईश्वरोवेद तथाप्येतादृशमठाधिपपतेराश्र
मप्रयुक्तलोकप्राप्तिर्नास्तिआरूढपतितत्वात् उक्तंचविष्णुना आ
रूढंनैष्ठिकंधर्मंपुनः प्रच्यवतेतुयः प्रायश्चित्तंनपश्यामियेनशुध्ये
आत्महात्सततस्तच्छिष्याःक्षत्रियवैश्यशूद्रसंकराःसंन्यासिनका
षायधारिणऊचुः अस्माकमपिकर्मविवेकः कर्त्तव्यः ततस्तान्
परिषदुवाचप्रथमंतुदैवीसपदजातस्यैवाधिकारस्तत्रापि विप्रस्यै
वतुर्याश्रमोस्तिउक्तंच त्र्येकदंडकाषायाणिन्यासलिंगानियान्यपि
तेष्वधिकृतिमाहुर्विप्रस्यश्रुतयःस्फुटमित्यादिवचनशतानिपूर्व
मुक्तानिकिंचास्मिन्युगे सन्यासलिंगधारणेकाषायस्यैवमुख्यत्वं

सदाधार्यत्वात् दंडंतुशुद्धकालेएवधार्यतेभवद्भिश्चगार्गी विदुर योः काषायधारणेप्रामाण्यतामभिधायधार्यते तदपिव्यर्थैव तयोःकाषायधारणांकुत्रापिनोक्तंतन्निर्देशोऽपिवृथातयोरुत्कृष्टदेव तांशत्वात् भवत्सुचप्रत्युतनिषेधोस्ति जपस्तपस्तीर्थयात्राप्रव्र ज्या मंत्रसाधनंदेवताराधनं चेतिस्त्रीशूद्रपतनानिषट्विप्रसेवैव शूद्रस्यविशिष्टं धर्मलक्षणं यदतोन्यद्विकुरुतेतद्भवत्यस्यनिष्फ लमितिसुमंतूक्तेः ॥ २ ॥ भारतेशूद्रस्तुद्विजशुश्रूषाविरुद्धंधर्ममा चरन्॥नरकेपच्यतेतद्वद्वेद्श्रवणकीर्तनात्॥३॥विष्णुपुराणेभैक्ष्य वृत्त्यातथाशूद्राप्रव्रज्यालिंगिनोऽधमाः पाषंडसंश्रयांवृत्तिमाश्रयि ष्यंत्यसंस्कृताः॥१॥सर्वेब्रह्मवदिष्यंतिसंप्राप्तेतुकलौयुगेनानुतिष्ठं तिमैत्रेयशिश्नोदरपरायणाः॥२॥भविष्यत्पुराणेगृहेगृहेपुस्तकभा रभारंपुरेपुरेपंडितयूथयूथं मठेमठेतापसवृंदवृंदंनब्रह्मवेत्तानचक र्मकर्ता नचैवंशूद्रेतरयोः क्षत्रियवैश्ययोः किंचित्कर्मितिवाच्यम्॥ तत्पंक्त्यांतद्धस्तेनचभोजनत्तयोस्ततोपिनिकृष्टताइतिवेद्यं।३।शा तातपः निरंतरंतीर्थसेवासंन्यासोमंत्रसाधनं देवताराधनंध्यानंते षांपापावहंपरं॥४।इतिवचनशतानिसंतियत्तुवाक्यंनिर्मायलिखि तंकेनचित् त्यागमात्रात्मकेन्यासेशूद्रस्योरधिकारताइतिअथच भाष्यकृद्वाक्यं हठाभ्यासोहिसंन्यासोनैवकाषायवाससा नाहंदेहो हमात्मेति निश्चयोन्यासलक्षणं इतितत्रनैव काषायवाससा इति स्पष्टमुक्त मेव अथचन्यासलक्षणं नाहंदेहोहमात्मेतियदुक्तंतत् न्यासपदस्ययोगिकं व्याख्यानंवारूढिर्वासंज्ञावाकोशादिषुवर्तते चेत्सम्यक् निक्षेपापरपर्यायस्यन्यासशब्दस्य समर्पणंनिवेदनंदा नमित्याद्यर्थाः शास्त्रेषुप्रतीयंतेभवत्कल्पित नवीनार्थस्तुनकुत्रापि श्रुतः अतोयूयं इंद्रनिर्मितपाषंडेषु स्थिःताकर्मविवेकानर्हा इति ज्ञेयं किंचईश्वरः सर्वभूतानांहृद्देशेर्जुनतिष्ठति भ्रामयन् सर्वभूता

नीतिवाक्येयावत्तिष्ठतितावद्भ्रामयति संसारेस्वर्गनरकादिषु ध
र्माभासेषु पाषंडादिषु वा तस्योपायस्तदग्रेवोक्तस्तमेव शरणंग
च्छसर्वभावेनभारत सर्वभावेनसर्वेंद्रियैरित्यर्थः तच्चवाणीगुणानु
कथनेश्रवणौकथायांइति तथाजिह्वेकीर्त्तयकेशवंमुरारिपुंचेतो भ
जश्रीधरंइत्यादि द्वितीयप्रकारासर्वांगप्रपत्तिः भवाब्धिसेतुग्रंथे
स्पष्टमुक्ता तत्स्वीकारेपिभवतांमोक्षोभविष्यति प्रपत्तिपाकानंत
रमितिदिक् साचआचार्यं मध्यगंकृत्वास्वांतस्थेनयदाम्रतावासु
देवायचात्मानंबालएवसमर्पयेदित्यादिरूपास्पष्टमभिहिता इति
श्रीकर्मविवेके गीतारामनिर्मिते संन्यासिनां उदाहरणं चतुर्णां
समाप्तं। अथसकल विरक्तानां तथाविरक्तवेषधारिणां पुनर्गृहस्थ
सेविनां वातत्तद्गृहस्थवस्तुजातसंग्रहपराणां द्रव्यसंग्रहस्त्रीसंग्रहा
दिपराणांविप्रेतरवर्णत्रयज काषायधारिणां तथाइन्द्रनिर्मितन
ग्नरक्तपटखट्वांगादि धारिणांच सामान्येन कर्मविवेकोऽभिधीय
तेतत्रयेविरक्त्याऽच्युतगोत्रेप्रविष्टास्तेतुकृतकृत्याएवप्रपत्तिनिष्ठ
त्वात् तदितरेषांतु भवाब्धिसेतुग्रंथोक्त प्रपत्तिभेदेषु अवतरणंवि
धेयमित्यधिकारः यद्यपिसर्वमते उपदिश्यमान मंत्रेषुप्रपत्तिगर्भ
ताअस्तितथापि पुनस्तस्यपुण्यत्वंअपेक्ष्यंप्रपत्ति पाकदशाभव
ति यावत्तावदपेक्षणीयं एतच्चपरीक्षाप्रकरणे वासुदेवाश्रयोमर्त्यो
वासुदेवपरायण इत्यत्रव्याख्याने स्फुटम् किंचसर्वधर्मान्परित्य
ज्यमामेकंशरणं व्रज अहंत्वासर्वपापेभ्यो मोक्षयिष्यामि माशुच १
अस्यार्थः सर्वधर्मान् कर्मज्ञानभक्तिरूपान् मत्प्राप्तिसाधनत्वेनपू
र्वोक्तान् परित्यज्यतेषु पापाद्व्यवसायं परित्यज्यरुचिवासनाभ्यांस
हअयुतरंकुरंत्यक्त्वामामेकं मत्प्राप्त्युपायंव्रजअवगच्छ अहंत्वां
सर्वधर्मोपायत्यागपूर्वकंमामेवोपायत्वेनाध्यवसितवंतं सर्वपापे
भ्योमत्प्राप्तिप्रतिबंधकेभ्यो मोक्षयिष्यामि अश्लेषविनाशरूपमो

क्षयंतं करिष्यामि माशुच शोकंमाकार्षीः सर्वोपायविलक्षणेमयि स्ववशे किंतेशोकनिमित्तमितिभावः व्याख्यानांतरं सर्वधर्मान् नित्यनैमितककाम्यरूपान् परित्यज्य मयीतिशेषः मांशरणं व्र जउपायमवगच्छ अहंत्वांमदेकोपायाध्यवसितवंतं मत्प्राप्तिप्र तिबंधकेभ्यो मोक्षयिष्यामि माशुचसर्वधर्मपरित्यागेन रिक्तो भवामीति शोकंमा कुरु व्याख्यानांतरं सर्वधर्मान् विहितातिरिक्तान्काम्यानित्यर्थः परित्यज्यप्रायश्चितार्थत्वेनेत्यादिउत्तराईपापमोक्षरूपफलस्योक्तत्वात् मांशरणंव्रज अहंपापेभ्योमोक्षयिष्यामि सर्वत्रभविष्यदुक्ति प्रपत्तिपाकदशावधिद्योतयतिसर्वपापप्रायश्चित्तेभ्यः प्रपतिरधिकाप्रायश्चित्ते इतिभावः व्याख्यानांतरं सर्वधर्मान् त्रिकालोपार्जितान् परित्यज्यतथाअतीतधर्माननतीतपापार्थेप्रायश्चितत्वेनप्रतिपदोक्ताद्य विवेचनरीत्यासंघाताद्यविवेचनरी त्यावापरित्यज्यसंकल्प्याधिकाघनिवृत्यर्थेवर्तमानभविष्यत्क्रियमाणधर्मांश्च संकल्प्यमांशरणमुत्कृष्टोपायंव्रजअवगच्छयद्वाअविनाश्याघवज्रलेपरूपाद्यनिवृत्यर्थंच शरणंव्रजअहंसर्वतोमोक्षयिष्यामिमाशुचअत्रसर्वत्रार्थेषु किंचित्किंचितारतम्यंज्ञेयं व्याख्यानांतरं सर्वधर्मान् आत्मानं चमयिअर्पयेतितात्पर्योर्थः यथाभरन्यासआत्मन्यासरूपाशरणागतिः क्रियते यथाचलोकेरथादियानादिषु प्रथमतः स्वभारंस्थापयति पश्चात्स्वयमारोहयेतिएवंमयिसर्वधर्मानर्प्य शरणागतिंगृहे स्थितरीत्याकुरुततोहंसर्वपापेभ्योमोक्षयिष्यामि अर्थात्पापानुसंधानरहितभीत इवचौरेभ्योप्रथमंमयि धर्मानर्प्यशरणं व्रज ततोहंपृष्ठलग्नान् चोरान्पापरूपान्नाशयामिमाशुच व्याख्यानांतरं यथा कश्चित्पांथोगम्यदेशमार्गं द्विविधमवेक्ष्यसंदिग्धोभवतिसंप्रति सन्मार्गोपदेष्टाऋजुमार्गमुपदिशति एवमत्रापिकश्चित्सर्वपापप्रा

यश्चित्तेप्रवृत्तः परलोकायसुखाप्तये तं प्रतिक्लिष्टमार्गं विहाय सुलभोपायमुपदिशति भगवान् व्याख्यानांतरंयावंतः कृच्छ्राः सर्वपापनाशकाउक्ताः शास्त्रेषुतेभ्योऽधिककृच्छ्रफलाप्रपतिरस्तीति अतएवपापनाशकप्रायश्चित्तेऽधिकाप्रपतिरुक्ता अयुतायुता इत्यर्थः व्याख्यानांतरं सर्वधर्मान्पापमोक्षफलकान्परित्यज्यविहायनित्यनैमितकातिरिक्तान् त्यागसक्तान्उत्तरार्द्धे पापमोक्षफलमेवोद्देश्यताउक्तायद्यपि नित्यनैमितकानुष्ठानेपिपापमोक्षोभवतितथाप्यावश्यकत्यागे स्वरूपनाशः मांशरणंव्रजमोक्षयिष्यामिसर्वत्रभविष्यदर्थस्तुप्रपतिपाकदशावधिएवेति व्याख्यानांतरं सर्वधर्मान्पापनिवृत्तये परित्यज्ययथालोके उच्छिष्टभूमौ तच्छुद्ध्यपेक्षी प्रथमतउच्छिष्टमार्जनं करोतिपश्चात्तदुपलेपनं चकरोतीतिभूशुद्धिर्जाता एवमत्रापिपापनिवृत्तयेधर्मान् नित्यनैमित्तिक काम्यान्परित्यज्यतत्र यथातृणेषु पतितोवह्निः स्वयमेवधक्ष्यतिएवं नित्यनैमितकानुष्ठाने तुस्वतएवपापनाशोभवति काम्ये नतुयथाशास्त्रंसंकल्पितपापनाशः इत्युच्छिष्टमार्जनवत् जातंततः शरणंव्रजेति शरणागत्याउपलेपनप्रतिनिधिभूतयाहृच्छुद्धिर्जातातत: शोधितहृदये स्वतएवस्थितो जीवस्तदंतर्यामितयाईश्वरश्चप्रत्यक्षतामेष्यतः माशुचः शोकलेशो नास्ति इतिभावः व्याख्यानांतरं सर्वधर्मान्परित्यज्य नित्यनैमित्तिककाम्यान् उपायत्वेन परित्यज्यकलौ कल्मषमनस्कतयाधर्माधिकाराभवात्कृतेपि कर्मज्ञानभक्तिरूपे धर्मत्रये तत्साध्यं युगांतरवत्फलं नप्राप्नोति वरण्यादि शक्तिश्चसुतरांतात्कालिकी नभवति तत्करणंतु भगवदाज्ञानरूपत्वेनस्वरूपरक्षार्थमेव अन्यथा वेदाज्ञाभगवदाज्ञा हानिरूपेदोषः शिरसिआपतेत् अतस्तत्करणं वावश्यकमेवकल्मषमनस्कतया अधिकाराभावेन फलाभावए

वउक्तं च कलौयुगे कल्मषमानसानामन्यत्रधर्मे खलुनाधिकारः प्र
पत्तेषु कलौमुख्यसाधनत्वमेव सर्वशास्त्रेषु निश्चितं प्रत्युतच्छक
लान्यपित्तच्छतांशकानिच मुख्यसाधनानि भवंति तत्पाके
पिसिद्ध्यतिकार्यमिति निष्कर्षः तथाचविप्रेत्तरसर्व जात्युद्भ
व जनकाषायधारक मोक्षविषयोपायः कलौशरणागतिरेव पा
कदशापन्नाभवति यद्यपिलिंगधारणं पाषंडस्तथापि देहगुणा
दात्मगुणो बलवान्भवति शरणागतिःप्रबलाजायते भजंति ये
पुष्कराक्षंनतेषां विद्यतेभयं तथा जन्ममृत्यु जराव्याधि भयंनै
वो जपायते अनेन जराव्याधिभयं इहलोकेयत् जन्ममृत्युभया
भावस्तु संसाराभावएवेति द्वयमपिसिद्धं अपिचेत्सुदुराचारोभज
तेमामनन्यभागित्यादि भगवदुक्तेः अत्रायंनिष्कर्षःयोयोविष्णोर
वतारो नृपोवा यदाभवति तद्वर्त्तमान दशायांतथातत्प्रतापानुसा
रेणयत्रतत्र लक्षरीत्येवचलतियथारामकृष्णाद्यवतारचरित्रं संप्र
त्यपिजनैरनुष्ठीयतेरामलीलारासलीलादिकंचेतिस्पष्टमेव एवंबौ
द्धावतारचरित्रमपिब्रह्मात्मैकत्वरूपतयेन्द्र गृहीतपाषंडलिंगंचसं
प्रत्यपिजनेषु तत्रतत्रवर्त्तते तदुक्तं विष्णुपुराणेतृतीयेंशेऽष्टादशा
ध्याये ततोदिगंबरोमुंडोबर्हिछत्रधरोद्विज मायामोहोसुरांश्लक्ष्ण
मिदंवचनमब्रवीत्॥ १ ॥ पुनश्वरक्तांबरधृक्मायामोहोसितेक्षणः
अन्यानाहासुरान् गत्वामृद्वल्पमधुराक्षरं ॥ २ ॥ विज्ञानमयमेवैत
दशेषमवगच्छथ बुध्यध्वं मेवचः सम्यग्बुधैरेवमुदीरितं ॥ ३ ॥ ज
गदेतदनाधारंभ्रांतिज्ञानार्थतत्परं रागादिदुष्टमत्यर्थं भ्राम्यते
भवसंकटे॥ ४ ॥ स्वल्पेनैवहिकालेनमायामोहेनतेसुराः॥मोहिताः
तत्यजुः सर्वांत्र्ययीमार्गाश्रितांकथां ॥५॥ केचिद्विनिंदांवेदानां दे
वानामपरेद्विज यज्ञकर्मकलापस्यतथान्येचद्विजन्मनामित्यादिसं
क्षेप एव विस्तरोभविष्येपूर्वमपि प्रोक्तः तत्र जनानांरुचिस्तु

स्वस्वप्रकृतिसत्वानुसारेणैवेति तात्पर्यंयथाचलिंगपुराणे नच क्रांकानशंखांकाः नचपद्मगदांकिनः लिंगांकाचभगांकाचत स्मान्माहेश्वरीप्रजेतिवदतांयावद्भक्तिस्तावदेवमेवप्रतिभातिभक्तः पाकदशावसानंयावदितिसंक्षेपः तेचोपासनातिश्रेणीस्यातदु परिसोपानेअवरुह्यवेत्स्यंतिसाचोदनानिश्रेणीकर्मभोगनिश्रेणी चश्रीमद्भागवताद्यष्टादशपुराणेषुप्रसिद्धा स्ततोवेदितव्याःविस्त रभयान्नेहप्रपंच्यतेइतिदिक् ॥ कुरुक्षेत्रैकेदेशस्थकमलाग्रामजन्म वान् श्रीमान्गोविंदशर्मेतिनाम्नाविख्यातकीर्तिमान् ॥ १ ॥ श्रीपूर्वश्वेतरामोभूत्तत्सुतःसर्वशास्त्रवित् हरेर्नाम्नांलक्षसंख्याप्र त्यहंजापकःसुधीः ॥ २ ॥ श्रीमद्गिरिधरदासाख्यस्तत्सुतः स र्वशास्त्रवित्॥ विशिष्टाद्वैतसिद्धांततत्वपारप्रदर्शकः ॥ ३ ॥ गीता रामोभवत्तज्ज्ञोविवेकंकर्मणांत्विदं ॥कुर्वेकृत्वायथाशास्त्रंसीतारामप दार्पणं ॥४ ॥ रसवेदांकभूवर्षेशकेरुद्रधृतौतथा॥इषुमाससितेपूर्णं दशम्यांशुक्रवासरे ॥५॥ इतिश्रीकुरुक्षेत्रांतर्गतकमलाग्रामवासि श्रीगिरधरदासपुत्रगीतारामनिर्मितेकर्मविवेके सकलविरक्ताच्यु तगोत्रप्रभृतिकाषायधारिखट्वांगधारी तथाइंद्रनिर्मितनम्नरक्त पटादिपाषंडधारिणां उदाहरणं तरणोपायप्रकरणं ॥ अथपरीक्षा ध्याय आरभ्यते॥अथोपोद्घातः॥स्वानुभवोद्भवःप्रथमतः सहसा यं ग्रंथआरब्धः ततः किंचित्निर्माणानंतरं संदेह उत्पन्नःकितिमि चेत् मन्निर्मिते ग्रंथेविश्वासेन यदिकश्चित्पुरुषः एतदुक्तरीत्या स्व कृतपुण्यैः पापानिनिरस्य परलोकेगतः तत्रधर्मसभायां एतत्कृत स्यकर्मणो यदिसंमतिस्वीकारो नभविष्यति तदाविश्वासघात दोषो भविष्यति ममेति ततोमयातदर्थं तत्रानुमितियमसभास्था नं यथाभवेत् अमोघउपायआरब्धः तदुपायेमासेऽतीतेऽसाध्य मेतदित्युक्तं स्वप्नशकुनादिभिः ततः पुनरपितदेवारब्धं तदेवोत्त

रं जातं ततस्तृतीये पर्यये किंचित्सहायसाध्यंचेत् धर्मसभाया म
नुमतिर्भविष्यति तदनंतरमप्यनुष्ठाने प्रारब्धे परीक्षाध्याये परी
क्षोक्तरीत्याहृद्यंजातंचेत् यमोवैवस्वतो राजायस्तवैषहृदिस्थितः
तेनचेदविवादश्चेन्मा गंगांमाकुरून् गमेति वाक्यंश्रुतं तदातत्र
धर्म सभायामपि अनुमतिर्भविष्यति सभास्थामुनयोंगीकरिष्यं
तीत्युत्तरंजातं परिक्षाध्यायनिर्माणं कर्तव्यमवश्यमिति श्रुत्वानिः
संदिग्धोहमेतत्परिक्षा प्रकरणनिर्माणमकरवं अथपरीक्षातत्र
ममाजन्मकृतज्ञाताज्ञातपुण्यपापकर्मणां परस्परं पापापनोद
नत्वे संकल्पिते साम्यतान्यतरस्य चाधिक्यंचेतिचेदुच्यते हारी
तः स्वशिरसायवसमादाय गोभ्योदद्यात् यदितासर्वामुदिता
गृह्णेयुश्चेत्तत्तृणं तदाकर्ता शुद्धः कतिपयग्रहणेत्रैराशिकं अन्य
थापुनः प्रायश्चित्तंएवंसर्वत्र पापिषुपरीक्षा ॥ १ ॥ परीक्षांतरं
यमः अवबोधः परित्यागः तपोदानानुकीर्तने विद्याभ्यासोह्यपां
स्पर्शः सप्तांगं पापनाशनं अस्यार्थः अवबोधः पापस्य दुःखहेतु
त्वेनग्लानिविषयः परित्यागो नपुनः क्रिया तपोदानेप्रसिद्धे अनु
कीर्तनं पापस्यविद्यावेदस्तस्याभ्यासः अपांस्पर्शः सदातीर्थस्ना
नं एतेषु सप्तसु सुतरां रुचिर्जाता चेच्छुद्धः॥ २ ॥ परीक्षांतरं परा
शरः प्रायश्चित्तेषु सर्वेषु कुर्याद्ब्राह्मणभोजनं शक्त्यावित्तानुसारेण
प्रायश्चित्तानुरूपतः एवंरुचिः पर्वसुसदैवसुतरामनिमित्तंजाता
चेतृशुद्धः परीक्षांतरं आसहस्राद्ब्रगायत्रींप्रणवमयुतं तथाप्रत्य
हंजपनिष्ठः स्यादनिमित्तंसदारुचिः॥ १ ॥ एवंचेत्सदारुचिनि
ष्ठःशुद्धःस्यात् ॥ ४॥ परीक्षांतरंविष्णुःकृतेपापेनुतापोवैयस्यपुंसः
प्रजायते प्रायश्चित्तं तुतस्योक्तंहरिसंस्मरणं परं ॥ १ ॥ प्रातर्नि
शितथासंध्यामध्याह्नादिषुसंस्मरन् नारायणमवाप्नोतिसद्यःपा
पक्षयान्नरः ॥ २ ॥ अनुतापाधिक्यं निरंतरमुत्तरोतरमधिकं

चेत् प्रत्यहंतदेकाग्रवृत्तिश्चेत् शुद्धः इत्येकः पक्षः ॥ हरिःसंस्मरणं परं सर्वदाहरिसंस्मरण मुत्पद्यतेचेत् जिह्वाग्रेनामतिष्ठतिचेत् स्वभावतः शुद्धोजातइतिविवेचनीयं नापः पुनंतिपापानिनशैला नापिचाशुगाः आत्मापुनातिपापानि यदिपापान्निवर्तते इत्युक्तेः॥ परीक्षांतरं मनुःकृत्वापापन्यनेकानि संतप्यच पुनःपुनःनैवंकुर्यामि तिपुनर्निवृत्त्यापूयतेतुसः इत्युक्तथापुनस्तत्स्मरणेग्लानिरुत्पद्यते चेच्छुद्धः परीक्षांतरं भविष्यत्पुराणे अपुनःकरणात्पापात्स्यापनादनुचिंतनात् व्यपैतिमहदप्येनः प्रायश्चित्तैर्नकेवलं॥परीक्षांतरं विष्णुधर्मोत्तरे ॥७॥ गवाह्निकंदेवपूजावेदाभ्यासः सरित्प्लवःनाशयत्याशुपापा निमहापातकजान्यपि सदैवैयंप्रवृत्तिःस्वतएवजाताचेत् शुद्धः परीक्षांतरं दययासर्वभूतेषुसंतुष्ट्यायेनकेनवा सर्वेन्द्रियोपशांत्याच तुष्यत्याशुजनार्दनः॥ ६ ॥ समुदित त्रिकमुत्पद्यतेचेत्शुद्धोजात इतिविवेचनीपरं परोक्षांतरं यथागेहेबालादिनाशुनामार्जारेणवामलोत्सर्गः कृतः तन्मलापकर्षणेकृतेपियावद्भूमिलेपनंनकरोति तावन्नशुद्धिर्जाताभवति एवंपापानांप्रायश्चित्तेनाशेपि भूमिस्थानंहृदयंनशुध्यति तावन्नाशुद्धिनाशः तदुक्तं प्रायश्चित्तान्यशेषाणितपः कर्मात्मकानिच ॥यानितेषामशेषाणां कृष्णानुस्मरणंपरं ॥ ७ ॥ गुरूणांचलघूनांचगुरूणिचलघूनिच प्रायश्चित्तानिपापानांज्ञात्वोक्तानिमहर्षिभिः ॥ ८ ॥ तैस्तान्यघानिपूयंतेतपोदानजपादिभिः नाधर्मजंतद्धृदयं तदपीशांघ्रिसेवया ॥ ९ ॥ अस्यार्थः पापान्येवनश्यंतिवासनातुननश्यति सैवपुनरुदेति यतोत्रोदेतिचेत्शुद्धः [साहृदयशुद्धिरेवापेक्षितासर्वत्रेति विवेचनीयंसाचकृष्णानुस्मरणे पौनःपुन्येनोत्पन्नाचेन्नाशुचित्वं कृष्णानुस्मरणं सर्वप्रायश्चित्तेषूत्कृष्टमित्यर्थः परीक्षांतरं श्रवणमननकीर्तनस्मरणादिष्वेकतमेपिसुतरामति प्र

वृत्तिर्जाताचेत्शुद्धः एतेप्रयति शकला भक्ति शकला वासंति यद्वा सर्वभूतहृदयेईश्वरस्थितिरस्तीतिप्रतिभातिचेत् शुद्धः॥परीक्षांतरं यदापूर्वोक्त भक्तिशकलेषु स्मरणश्रवणकीर्तितेषु अन्यतमेपिएक स्मिन्नपिअमृतवत् स्वादुतामनुभवति स्मरणकाले रोमोद्गमश्चे द्भवति तदापिशुद्धः एतच्चसर्वंपूर्वकृतपुण्यैः पापनिरसना र्थंसंक ल्पंविधाय द्रष्टव्यं सर्वत्रेतितात्पर्यं अत्रपूर्वस्मात्किंचित्तारतम्यं परीक्षांतरंसर्वेषामप्यघवतामिदमेवसुनिष्कृतं नामव्याहरणं वि ष्णोर्यतस्तद्विषयामतिः अत्रनामव्याहरणेन सर्वपापानांनाशोभ वतिपुनस्तद्विषयामतिश्चेत् शुद्धइति एतत् पादद्वयतात्पर्यं ४३ परीक्षांतरं भागवते चतुर्थे कर्माणिचयथाकालं यथादेशंयथाबलं यथोचितं यथावित्तमकरोद्ब्रह्मसात्कृतं १ फलंब्रह्मणिसंन्यस्यनि र्विसंगः समाहितः कर्माध्यक्षंचमन्वान आत्मानंप्रकृतेः परं २ ए तदनुष्ठानेस्थिरबुद्धिश्चेदचिरेणैव शुद्धिमेष्यति १४ परीक्षांतरं पद्मपुराणे माघमाहात्म्ये यावज्जीवंकृते पापेप्रायश्चित्तमथाकरो त् देवपूजारतोनित्यंनित्यंचा तिथिपूजकः पक्षेपक्षेचसंप्राप्ते द्वा दश्यामुपवसेत्तुयः शुचिरित्यर्थः १५ परीक्षांतरं तथाब्रह्मादयो पिकुर्वंति तुलसीवनपूजनं रोपणात्पालनात्सेकाद्दर्शनात्स्पर्श नान्नृणां तुलसीदहते पापंवाङ्मनः कायसंचितं आम्रारोपसहस्रे ण पिप्पलानांशतेनच यत्फलंहितदेकेन तुलसीविटपेनच वि ष्णुपूजनसंसक्तस्तुलसीं यस्तुपूजयेत् युगायुतंदशैकंचरोपकोरम तेदिवि एवंनिष्ठश्चेत् शुद्धः ॥१६॥ परीक्षांतरं अधर्मोऽष्टधाप्रकी र्णकादिभेदेन तथा धर्मोपिदशधाशमोदमस्तपः शौचमित्यादि नवविधः दशमस्तुनिवृत्ताख्यः सर्वोत्कृष्टोस्तितत्रनवविधमनुति ष्ठन् दशमेपरानिष्ठाचेत् शुद्धोजातइति विवेचनीयं ॥ १७ ॥ प रीक्षांतरं ब्राह्मणस्यशमोदमइत्यादिनवसंख्याकोधर्मः क्षत्रिय

स्यशौर्यंतेज इत्यादिसप्तविधं वैश्यस्य कृषिवाणिज्येति चतुर्वि
धःशूद्रस्यसेवात्मकोधर्म एकविधः स्त्रीणां सधवानांपतिसेवाशील
रक्षणं विधवानांशीलरक्षणं धर्मनिष्ठात्मकोद्विविधः तेषांतत्रतत्र
परानिष्ठा परधर्मेपराग्लानिश्चेत् शुद्धोजातइति विवेचनी
यम्परीक्षांतरं श्रवणमननकीर्त्तनस्मरणादिषुकृतेषुअंतःकरणम
तिस्वादुतामनुभवतिचेत् शुद्धोजातस्तदेवपुनःपुनश्चिकीर्षति
अतीयेतिच ॥ १९ ॥ परीक्षांतरं वासुदेवाश्रयोमर्त्योवासुदे
वपरायणः सर्वपापविशुद्धात्मायातिब्रह्मसनातनं ॥ १ ॥ अत्रो
पायद्वयेएकोनुष्ठितश्चेत्सर्वपापनाशः द्वितीयेनुष्ठितेविशुद्धात्माभव
ति विशुद्धेति उभयतोन्वेतिदेहलीदीपकन्यायेन अर्थस्तुवासुदेवा
श्रयोमर्त्यः सर्वपापविशुद्धोभवति सएववासुदेवपरायणस्तु विशु
द्धात्माभवति मर्त्यस्यवासुदेवाश्रयत्वंतत्प्रपत्तिरेवअथपरायणश्चे
तिशुद्धात्माभवतिअंतःकरणशुद्धिरपिभवतीत्यर्थः२० परीक्षांतरं
अकृत्यंकर्तुंपरमप्रेमेणोद्युक्तोनरस्तत्रदैवाद्यदिविघ्नंजायतेगोपति
वैश्यवत् एकवारंद्विवारंत्रिवारंचेद्भगवत्कटाक्षोवश्यंभावीतिज्ञेयः
चित्रकेतुराजवत्तंभ्रंशयामिसंपद्योयस्यचेच्छाम्यनुग्रहमित्युक्तेः
पदकृत्यंकर्तुमुद्युक्त परमप्रेम्णातदेवास्यपरमसंपद्रूपंज्ञेयं यद्वासंप
द्भ्यो असुरीसंपद्भ्योभ्रंशयामिदैवीसंपत्तुप्रत्युतमोक्षयणवोक्तागी
तायामित्यर्थः परीक्षान्तरंनशरीरमलत्यागान्नरोभवतिनिर्मलःमा
नसेतुमलेत्यक्तेभवत्यत्यंतनिर्मलः ॥१॥ जायंतेचम्रियंतेचजलेए
वजलौकसः नचगच्छंतितेस्वर्गमविशुद्धमनोमलाः ॥ २ ॥ विष
येष्वतिसंरागमानसोमलउच्यते तेष्वेवहिविरागोस्यनैर्मल्यंस
मुदाहृतं॥३॥ चित्तमंतर्गतंदुष्टंतीर्थस्नानान्नशुध्यति॥शतशोपिज
लैर्धौतं सुराभांडमिवाशुचिः ॥ ४ ॥ दानमिज्यातपः शौचंतीर्थसे
वाश्रुतंतथा॥सर्वाण्येतान्यतीर्थानि यदिभावो ननिर्मलः ॥ ५ ॥

निग्रहीतेंद्रियग्रामोयत्रवैवसतेनरः तस्यतत्रकुरुक्षेत्रंनैमिषं पुष्क
राणिच ॥ ६ ॥ एवंचेत्शुद्धः॥२१॥परीक्षांतरं नतथाह्यघवान्रा
जन् युयेततपआदिभिः यथाकृष्णार्पितप्राणस्तत्पूरुषनिषेवया त
ज्जन्मतानि कर्माणि तदायुस्तन्मनोवचः॥नृणांयेनेहविश्वात्मा से
व्यते हरिरीश्वरः॥ २ ॥ यथापाचकः पाकं सिद्धमसिद्धं वेतिपरी
क्षते तथैवस्वजन्मपरीक्षणीयंममेदं जन्मअंतिमंवास्तिनवास्ती
ति यदामनसा सहितो दशेंद्रियैः परमात्मनि प्रवणोभवति
तदेवांतिमंजन्म अन्यथानेति पूर्वश्लोकतात्पर्यं एवंचेत् शुद्धः
॥ २२॥ परीक्षांतरं तथाकायिकं त्रिविधं वाचिकं चतुर्विधंमानसं
त्रिविधमिति दशविधपापकर्माणि कदापिस्नेहपूर्वकं मनसः प्र
वृत्तिः स्मृतिर्वानभवेत् जुगुप्सयापूर्वमेव पश्येत्तदाशुद्धोजातः ना
पः पुनंतिपापानिनशैलानापिच शुगाः आत्मापुनाति पापानि य
दिपापान्निवर्तते इत्युक्तः ॥ २३ ॥ परीक्षांतरं पिशुनताक्रूरता
दंभो विषयात्मता शठता अहंकारः एषांयथा यथा हृदये ह्रा
सः तथा तथा शुद्धिर्विज्ञेया पाकपरीक्षावत् ॥ २४ ॥ परीक्षांत
रं यज्ञदानतपःकर्मपावनानि मनीषिणां॥ तत्रशास्त्रविधिनाजी
वन्मृतेभ्योदानंयज्ञः देशकालयात्रादि विचारपूर्वकजीवद्भ्योद
त्तंदानं शास्त्रोक्तमार्गेणशरीरकाष्टातपः त्रिष्वप्येतेषु यथाय
थाधिक्यं प्रवृत्तिस्तथातथाशुद्धिर्ज्ञेयासर्वमिदं स्वात्मनिएवस्व
यं विचार्य पाकपरीक्षावत् ॥ २५ ॥ परीक्षांतरं सप्तर्षयोथमनवः
प्रजानांपतयस्तथा सदाचारस्यवक्तारः कर्तारश्चमहीपते ॥ १ ॥
सतामाचरणं यत्तुसदाचारः सउच्यते भीताश्वासनकृत्साधुः
स्वर्गस्तस्याल्पकंफलं ॥ २ ॥ नोर्ध्वंनतिर्यग्दूर्ध्वंवानिरीक्षन्पर्यटेद्बु
धः युगमात्रंमहीपृष्ठं नरोगच्छेद्विलोकयन् ॥ ३ ॥ पापेप्यपापः
पुरुषोह्यभिधत्तेप्रियाणियः मैत्रीद्रवांतःकरणस्तस्यमुक्तिः करेस्थि

ता॥ ४॥ येकामक्रोध लोभानां वीतरागानगोचरे॥सदाचारस्थि
तास्तेषामनुभावस्थितामही॥ ५॥ एवंनिष्ठाजाताचेत्शुद्धः॥२६
परीक्षांतरं वसतिहृदिसनातनेचतस्मिन् भवतिपुमान् जगतोस्य
सौम्यरूपः क्षितिरसमतिरम्यमात्मनोंतः कथयतिचारुतयैव शा
लपोतः शालपोतोबालतरुः चारुतयासुकुमारतया रम्यंक्षितिरसं
स्वस्थांतर्यथाकथयति एवं सर्वभूतेषुसौम्यतया विष्णुभक्तो पि
विष्णुं स्वहृदिवसंतंसूचयतीत्यर्थः यावद्भ्रियेतजठरंतावत्सत्वं
हिदेहिनः अधिकंयोभिमन्येतसस्तेनोदंडमर्हति॥ २॥ अत्युष्णा
न्सघृतादन्नादछिद्राञ्चैववाससः अपरप्रेष्यभावाच्चभूयइच्छन्पत
त्यधः एवंनिष्ठानिष्ठितश्चेत्शुद्धः ॥ २१ ॥ परीक्षांतरं
यस्मिन्कामाः प्रविशंतिविषयेभ्योपसंहृताः विषयान्नपुनर्यांति स
कैवल्याश्रमेवसेत् ॥ २८ ॥ यस्मिन् क्रोधः समंयाति विफलः स
म्यगुक्तितः आकाशेसिर्यथाक्षिप्तः सकैवल्याश्रमेवसेत् ॥ २९॥
अतीतान्नस्मरेद्भोगान्नतथानागतानपि॥प्राप्तांश्चनाभिमन्येतसकै
वल्याश्रमेवसेत्॥ ३१॥ संध्यास्नानंतपः शौचंयस्यरिक्तं चतुष्टयं
रमणंचाद्वितीयस्यसकैवल्याश्रमेवसेत् अंतःस्थानींद्रियाराण्यंतर्ब
हिष्ठान्विषयान्बहिः शक्नोतियः सदाकर्तुं सकैवल्याश्रमे वसेत्
॥ ३२॥ एवंसंन्यासाधिकारवत् यस्यांतःकरणंशुद्धं जातंचेत्शु
द्धः इतिमनसिविवेचनं कार्य॥२८॥ परीक्षांतरं यदासंहरतेपापं
कूर्मोंगानीवसर्वशः इंद्रियाणींद्रियार्थेभ्य इत्युक्तरीत्याजातश्चेत्शु
द्धः ॥ ३९ ॥ यश्चदुर्जनेरितवाक्यकंटकविद्धोहृदिनभवेत् सोपि
शुद्धइतिद्वितीयापरीक्षा ॥ ३० ॥ परीक्षांतरं यस्यसर्वेसमारंभाः
कामसंकल्पवर्जिताः त्यक्ताकर्मफलासंगं नित्यतृप्तो निराश्रयः
इतिप्रकारेणानुष्ठानवान्शुद्धः ॥३१॥ परीक्षांतरं भागवते यदा
स्यचित्तमर्थेषु सर्वेष्वेंद्रियवृत्तिभिः नविगृह्णातिवैषम्यं प्रियमप्रि

यमित्युत ॥ १ ॥ सततदैवात्मनात्मानं लिसंगतमदर्शनः हे योगादृयरहितमात्मरूपदमीक्षते ॥ २ ॥ अन्यार्थः यदास्यचित्तं ...तिनिश्चलं सदिंद्रियवृत्तिभिरर्थेषु वैषम्यं नगृह्णातितदाआ त्मनात्मप्रकाशमात्मानमीक्षतेएवंज्ञातश्चेत्शुद्धः ॥ ३२॥ किंचपै पंहृद्यंजन्मतआरभ्यैवैतादृशं तेषांनैयपरीक्षा येषांतु पूर्वकल्मषो पेतंतासीत् ततः पुण्यैःपापनाशे संकल्पिते शुद्धहृदयं जातंचेत् परीक्षाज्ञेयायेषां सर्वत्रविचार्यं किंचपुण्यपापयोर्यथाविधानंचेद्भ वतितदैवतत्फलं यथालिखितंउग्रत्वंचकुत्रचिद्भवतिअन्यथाने ति सर्वधर्मशास्त्रतत्त्वसिद्धांतः सर्वत्रेति विवेचनीयं अत्रदृष्टांतः पुण्यविषयेतुउदाहरणद्वयं पूर्वमुक्तंहेमकांताख्यराजस्तथासंकृति गोत्रेमैत्राख्यद्विजस्यचेति पापविषयेतुउदाहरणंयथा अज्ञा तागौर्ब्राह्मणस्यनृगराज्ञासंकल्पिता ॥ तत्रपापंसर्वपुण्येभ्यस्तस्य बलिष्ठंजातं कथमिति चेत् सागौः सीदत्कुटुंबस्यकनखलवा सिनोद्विजस्य ऋजुशीलस्यासीत् तथामथुरावासिसीदत्कुटुंबि नेद्विजायवाक्चतुरायदत्तापुनश्चतौद्विजावुभौस्वसंतुष्टिधर्मंसुसंर क्ष्यगतौराज्ञातुप्रमादाद्विवेकोनकृतः स्वकर्मणोसः सर्वपुण्येभ्यो बलिष्ठताजाताप्रथमंभुक्तिशरठत्वरूपेति अथपापेगर्वद्धिगणना तद्यथासीदत्कुटुंबस्य द्विजस्य १एकागौर२द्वितीयं अज्ञातहरणं३ तृतीयं असीदत्कुटुंबिनेदानं चतुर्थं ४ पुनः प्रत्यर्पणे ब्राह्मणस्य अप्रसादः पंचमं ५ गोस्वामिनेगांदत्वाप्रायश्चित्ताकरणंषष्ठं ६ गोस्वामिद्विजमुख्य आसीत् उत्तमंपात्रं सप्तमं ७ राजनीतिरपि विरुद्धनीतिर्जाताउभयत्रद्वयं ८ सर्वमेलनेपापंनवांगकंजातं नि वारणमकृत्वागतः सरठोजातः उग्रत्वाद्बद्धंगयुक्तत्वाद्बलवत्त्वंजा तंभोगेप्राथम्यंचजातं॥ अथेंद्रस्यतुवज्रलेपोजातोविश्वरूपहननं नयथाब्राह्मणहत्या ॥ १॥ गुरुहत्या ॥ २ ॥ दीक्षितावस्था॥

ता ॥ ४ ॥ येकामक्रोध लोभानां वीतरागानगोचरे॥सदाचारस्थि
तास्तेषामनुभावस्थितामही ॥ ५ ॥ एवंनिष्ठाजाताचेत्शुद्धः॥२६
परीक्षांतरं वसतिहृदिसनातनेचतस्मिन् भवतिपुमान् जगतोस्य
सौम्यरूपः क्षितिरसमतिरम्यमात्मनोंतः कथयतिचारुतयैव शा
लपोतः शालपोतोबालतरुः चारुतयासुकुमारतया रम्यंक्षितिरसं
स्वस्थांतर्यथाकथयति एवं सर्वभूतेषुसौम्यतया विष्णुभक्तो पि
विष्णुं स्वहृदिवसंतंसूचयतीत्यर्थः यावद्भ्रियेतजठरंतावत्सत्त्वं
हिदेहिनः अधिकंयोभिमन्येतसस्तेनोदंडमर्हति ॥ २ ॥ अत्युष्णा
न्सघृतादन्नादछिद्राच्चैववाससः अपरप्रेष्यभावाच्चभूयइच्छन्पत
त्यधः एवंनिष्ठानिष्ठितश्चेत्शुद्धः ॥ २१ ॥ परीक्षांतरं
यस्मिन्कामाः प्रविशंतिविषयेभ्योपसंहृताः विषयान्नपुनर्यांति स
कैवल्याश्रमेवसेत् ॥ २८ ॥ यस्मिन् क्रोधः समंयाति विफलः स
म्यगुक्तितः आकाशेसिर्यथाक्षिप्तः सकैवल्याश्रमेवसेत् ॥ २९ ॥
अतीतान्नस्मरेद्भोगान्नतथानागतानापि॥प्राप्तांश्चनाभिमन्येतसकै
वल्याश्रमेवसेत् ॥ ३१ ॥ संध्यास्नानंतपः शौचंयस्यरिक्तं चतुष्टयं
रमणंचाद्वितीयस्यसकैवल्याश्रमेवसेत् अंतःस्थानींद्रियाराण्यंतर्ब
हिष्ठान्विषयान्बहिः शक्नोतियः सदाकर्त्तुं सकैवल्याश्रमे वसेत्
॥ ३२ ॥ एवंसंन्यासाधिकारवत यस्यांतःकरणंशुद्धं जातंचेत्शु
द्धः इतिमनसिविवेचनं कार्यं॥२८॥ परीक्षांतरं यदासंहरतेपापं
कूर्मोंगानीवसर्वशः इंद्रियाणींद्रियार्थेभ्य इत्युक्तरीत्याजातश्चेत्शु
द्धः ॥ २९ ॥ यश्चदुर्जनेरितवाक्यकंटकविद्धोहृदिनभवेत् सोपि
शुद्धइतिद्वितीयापरीक्षा ॥ ३० ॥ परीक्षांतरं यस्यसर्वेसमारंभाः
कामसंकल्पवर्जिताः त्यक्त्वाकर्मफलासंगं नित्यतृप्तो निराश्रयः
इतिप्रकारेणानुष्ठानवानशुद्धः ॥३१॥ परीक्षांतरं भागवते यदा
स्यचित्तमर्थेषु सर्वेष्वेंद्रियवृत्तिभिः नविगृह्णातिवैषम्यं प्रियमप्रि

धामित्युत ॥ १ ॥ स्वतेद्वात्मनात्मानं निःसंगं समदर्शनः हे
योपादेयरहितमात्मपदमीक्षते ॥ २ ॥ अन्वयार्थः यदास्यचित्तं
तिनिश्चलं सर्वेंद्रियवृत्तिभिरर्थेषु वैषम्यं नगृह्णातितदाआ
त्मनात्मप्रकाशमात्मानमीक्षतेएवंजातश्चेत्शुद्धः ॥ ३२॥ किंच
यांहृदयंजन्मतआरभ्यैवैतादृशं तेषांनैवपरीक्षा येषांतु पूर्वंकल्मषो
पेततासीत् ततः पुण्यैःपापनाशे संकल्पिते शुद्धंहृदयं जातंचेत्
परीक्षाज्ञेयायेषां सर्वत्रविचार्य किंचपुण्यपापयोर्यथाविधानंचेद्भ
वतितदैवतत्फलं यथालिखितंतथैवत्वंचकुत्रचिद्भवतिअन्यथाने
ति सर्वधर्मशास्त्रतत्त्वसिद्धांतः सर्वत्रेति विवेचनीयं अत्रदृष्टांतः
पुण्यविषयेतुउदाहरणद्वयं पूर्वमुक्तंहेमकांतास्यराज्ञस्तथासंकृति
गोत्रेमैत्राख्यद्विजस्यचेति पापविषयेतुउदाहरणंयथा अज्ञा
तागौर्ब्राह्मणस्यनृगराज्ञासंकल्पिता ॥ तत्रपापंसर्वपुण्येभ्यस्तस्य
बलिष्ठंजातं कथमिति चेत् सागौः सीदत्कुटुंबस्यकनखलवा
सिनोद्विजस्य ऋजुशीलस्यासीत् तथामथुरावासिसीदत्कुटुंबि
नेद्विजायवाक्चतुरायदत्तापुनश्चतौद्विजावुभौस्वसंतुष्टिधर्मसुसंर
क्ष्यगतौराज्ञातुप्रमादाद्विवेकोनकृतः स्वकर्मणोतः सर्वपुण्येभ्यो
बलिष्ठताजाताप्रथमंभुक्तिशरठत्वरूपेति अथपापेगत्वद्विगणना
तद्यथासीदत्कुटुंबस्य द्विजस्य १एकागौः२द्वितीयं अज्ञातहरणं३
तृतीयं असीदत्कुटुंबिनेदानं चतुर्थं ४ पुनः प्रत्यर्पणे ब्राह्मणस्य
अप्रसादः पंचमं ५ गोस्वामिनेगांदत्त्वाप्रायश्चित्ताकरणंपष्ठं ६
गोस्वामिद्विजमुख्य आसीत् उत्तमंपात्रं सप्तमं ७ राजनीतिरपि
विरुद्धनीतिर्जाताउभयत्रद्वयं ८ सर्वमेलनेपापंनवांगकंजातं नि
वारणमकृत्वागतः सरठोजातः उग्रत्वाद्भंगयुक्तत्वाद्बलवत्त्वंजा
तंभोगेप्राथम्यंचजातं॥ अथेंद्रस्यतुवज्रलेपोजातोविश्वरूपहनने
नयथाब्राह्मणहत्या ॥ १॥ गुरुहत्या ॥ २ ॥ दीक्षितावस्था॥

३ ॥ शस्त्रेणवधः ॥ ४ ॥ भागदानकालेभोजनकालेवधः
॥ ५ ॥ स्वस्यऋणापकरणार्थत्वेनभागस्येत्यनपराधित्वं ॥ ६ ॥
तिवज्रलेपोजातः अन्यथामहापापंशतजन्मानुपायीफलदानेभव
तीतिशास्त्रं इंद्रकृतपापस्येदानीमपिस्त्रीभूजलवृक्षादिषु अनुव
र्तमानत्वात् वज्रलेपताजाता इतिविवेकः।तथाप्रथमंतत् उग्रस्या
धिक्यं अत्युग्रस्यच ततआधिक्यं वज्रलेपः सर्वतोधिकः तस्यै
वाक्षयंपुण्यमितिनामातरं १ तच्चदेशकालपात्रकर्मसंपत्तौ भवति
यद्वादेशकालपात्रकर्मश्रद्धात्मेतिषड्भिः संभवति यथाएकेनमहा
पापं द्वाभ्यांयोगेउग्रत्वं त्रिभिरत्युग्रत्वं चतुर्भिर्वज्रलेपः इतितथा
चकर्मदेशकालपात्रेतिचतुर्णां संयतौवज्रलेपः श्रद्धात्मेतिषण्णांवा
भवति इतियोजना एवं देशाः पर्वाणिच तद्यथाकृच्छ्रपर्यंतं फल
दाउग्रास्ततऊर्ध्वंकृच्छ्रत्रयपर्यंतंफलदाअत्युग्राःततऊर्ध्वंषट्कृच्छ्र
फलदा वज्रलेपफलदाः एतद्व्यतिरिक्ता यथारूपफलदाः एवंपर्वं
सुविचारणीयं तथाअन्नजलऔषधादितोभवतितदपीश्वरकृपयै
वभवतिअन्यथानेतिवेद्यं गहनाकर्मणोगतिरितिशास्त्रात् तथाक
र्मणाकर्मनिर्हारश्चअविद्वदधिकारेएवेतिपूर्वमहर्षिभिः सिद्धांतितं।
अथसंक्षेपेणकलितरणोपायेषुतारतम्यमुच्यते तत्रमूलंमानुष्यंभ
वाब्धितरणेपूर्वतीरभूतंसर्वेश्वरोविष्णुरुत्तरतीरभूतः विष्णुःपरमो
देवानामग्निरवमइतिश्रुतेः तस्यासाधारण नामानिवासुदेव ना
रायणमधुसूदनेत्यादीन तत्रवासुदेवः परागति रित्यादिषु स्पष्टं
परत्वं तत्फलं मोक्षस्तत्कैंकर्यं वा तत्रोपायः पाकदशापन्ना प्रप
त्तिः तच्छकलावाश्रवणस्मरणकीर्तनादयोऽमोघरूपाः तत्ररु
चिवासनाभ्यामुपायांतरत्यागश्चावश्यमपेक्षितस्तत्क्लेशस्वीकारे
पिप्रपत्तिर्नश्यति ब्रह्मास्त्रवत्समाधिर्ज्ञेयाअयमुपायोऽत्युत्कृष्टोऽमो
घरूपः प्रथमः सर्वेउपायाः प्रपत्तावंतर्भूताः ततोन्यूनः कर्मयोगः

कार्यमित्येवमस्त्वामभगवति अपितोगहनः मुलभश्चमनोनिग्रहे त्रे
तायुगधर्मः ततोन्यूनोभक्तियोगः पाकदशापन्नो द्वापरयुगधर्मः
ततोन्यूनोज्ञानयोगोबहुक्लिष्टकतुयुगधर्मः एतेसर्वेस्वस्वयुगे प्र
धानाएवअपरयुगे गौणाक्लिष्टाश्चततोन्यूनोदेवतांतरभक्तिरूपः
योयोयांयांतनुंभक्तः इतिस्मृतेः येप्यन्यदेवताभक्तास्तेपिभक्त
जनार्दने कालात्मनोश्चनित्यत्वाद्दितं वान्मोक्षभागिन इतिन्यायात्
साचपाकदशापन्नाचेदुपास्यदेवतालोके गत्वा तदैश्वर्यमल्पंवी
क्ष्यतदुपरितनं विमानमुत्कृष्टंच वीक्ष्यतत्र रुचिंविधत्ते पुनरात्र
त्यतत्रभक्तिंकरोति सापाकदशापन्नाचेत्तल्लोकेनयति तत्रापिपूर्वव
दल्पमूर्ध्वस्थित विमानाल्लोकाद्वावीक्ष्य ततोपिविरक्तो भवाटव्या
मागत्य तत्रभक्तिं विधत्ते ततस्तृतीयदेवताविषये पाकदशापन्ना
चेत्तत्रनयति तत्रापि पूर्ववदुपरितनदेवतापेक्षयाऽल्पं वीक्ष्यविर
क्तः सन् भवाटव्यामागत्यतद्देवता विषयेभक्तिं करोतिएवंयावन्म
धुसूदनप्रपन्नेषु नगच्छति तावद्भवाटव्यांपरलोकेच भ्रमतियमाज्ञा
तइतिज्ञेयं येप्यन्यदेवता भक्ता इतिस्मृतेः अविधिपूर्वकार्चनत्र
भावादितिभावः भ्रमणंचेदंपाचकवत् भावद्वा बहुकालसाध्यंज्ञेयं
अनेकजन्मसंसिद्धः इतिस्मृतेः अतोयं मार्गो बहुजन्मसाध्यो भ्र
मणरूपोज्ञेयः यथागंगासागरान्नौकामार्गेण हरिद्वारं नौकावाहक
पुरुषैः प्रत्यहं गच्छन्योजनं गच्छति तद्वत् परंतु देवपूजारतोजा
त इतिप्रशस्यः ततोन्यूनःप्रयोजनांतरपरः सतुसंसारीएवपुरुषः
परंतुतस्याप्यास्तिकतां वीक्ष्यकलौ प्रशस्यएव अयमत्र संग्रहःक
लौ पाकदशापन्नप्रपन्नः मुख्यः ततोन्यूना उपायांतरपराः कर्म
ज्ञानभक्तियुगांतरधर्मपराःतेभ्योन्यूनादेवतांतरपराः तेभ्योपिन्यू
नाःप्रयोजनांतरपराः इषणात्रयप्रभृत्युपेताः संसारिणएवपरंत्वेते
सर्वेपिप्रशस्याःपूर्वोक्तरीत्याआस्तिकत्वात् एवंपूर्वोक्तरीत्यापरी

क्षांविधायस्वात्मनिस्वयमे वेतिनिष्कर्षंगृहीत्वेदं कुतोवापिस्त्रीपुंसांशतकर्णगं नकरोति द्विजोयावृत्तावत्स्याद्दणवान् मम इतिग्रंथनिर्माणक वाक्यं सप्तसप्ततिकोट्यस्तु रससप्ततिलक्षकाः सदाचारवतांनृणामेतेश्वासाः शताब्दिकाः २ तत्रापिबाल्यवार्धक्ये तथैवनिशिनिद्रया भागत्रयंस्वतोगच्छेत्तुर्यांशएवशिष्यते ३ अथ कर्मविवेके उपपत्तिः तत्रप्रथमंपुण्यं ततःप्रबलं उग्रपुण्यंततः प्रबलं अत्युग्रपुण्यं ततः प्रबलं वज्रलेपः तस्यैवाक्षयं पुण्यमितिनामांतरपर्यायःएवंप्रथमं पापं ततः प्रबलं उग्रपापं ततःप्रबलं अत्युग्रपापं ततः प्रबलं वज्रलेपपापं एतेसर्वेपि स्वस्वविषये एकपाद द्विपाद त्रिपाद चतुष्पादभेदेन चतुर्विधा उत्तरोत्तरं प्रबला उभये इति योमध्येतत्तत्पापस्य निवारणं तत्समबलेन पुण्येन सम्यग्विचार्यकर्तुंशक्यते सश्रेयान् अन्यथासर्वेषां परलोकेइहलोकेवा पृथक् पृथग्भोगः स्वस्वकाले एवतत्रपुण्यस्य नदीप्रवाहवत् परंपरामार्गेणोत्तरोत्तरमार्गेण वाभोगः उग्रस्यतु परलोकेसर्वेभ्यः प्रथमंनृगराजवत् अत्युग्रस्यइहलोके एवएकपादाद्यनुसारीबलेन प्रथमंप्रथमंभोगः यथारावणस्यात्युग्रंपापं एकपादंवर्षमध्ये एवभुक्तं यद्यपि हरणं परदाराणामत्यागोजीवहिंसनं राक्षसानांस्वभावविधितोधर्म एव तथापिताद्दशपातिव्रतधर्मनिष्ठविषये ऽत्युग्रपादमितंजातं हिरण्यकशिपोस्तु यावच्चतुष्पादपूर्तिःपापस्यप्रल्हादविषये अपचारैर्न जातातावन्नहतः तस्मिन्नत्युग्रतपसाचतुष्पादपूर्तिरूपिणापापस्यबाधितत्वात् यदाचतुष्पादपूर्तिरत्युग्रस्यपापस्यजातातदैवहतःएवंशिशुपालविषये पिअत्युग्रस्यइहैवभोगः अत्युग्रात्प्राबल्यं वज्रलेपस्य यथाविश्वरूपहनने इंद्रस्येतिपूर्वमुक्तमेव अतएवेंद्रेणविभागःकृतः तत्प्रायश्चित्तंतु कर्तुमशक्यं वज्रलेपत्वात्कुतइतिचेत् वज्रले-

पस्यप्रायश्चितं वज्रलेपपुण्येनैवकर्तुं शक्यते तच्चेश्वरपूर्णकृपांवि
नास्वेच्छयान सिद्ध्यति यथाकाकासुरविषये वज्रलेपपापस्यव
ज्रलेपपुण्येनइहैवनाशः एवंदुर्वाससोपिउक्तंचत्रिभिर्वर्षैस्त्रिभिर्मा
सैःत्रिभिःपक्षैस्त्रिभिर्दिनैः अत्युग्रपुण्यपापानामिहैवफलमश्नुते १
अत्रचत्वारोभेदाएकद्वित्रिपादादि विषयकपुण्यपापसूचितभेदज
निताश्लोकाउक्ताइतिवेद्यं अन्यच्चयादृशपुण्यस्यभोगकालेमरणे
तादृशलोकप्राप्तिः स्यात्प्रारब्धितत्वात् एवंयादृशपापस्यभोगका
लेमरणेसति उग्रात्युग्रादिपापनुरोधेनतल्लोकप्राप्तिः तत्पापभोग
स्यप्रारब्धितत्वात् एवंमुभयविषयेप्यूह्यं अतःकारणादिहैवकर्म
विवेकोबुद्धिमताविचार्यकर्तव्यः गहनाकर्मणोगतिरित्युक्तत्वादि
तिदिक् कुरुक्षेत्रैकदेशस्थकमलाग्रामजन्मवान् श्रीमान्गोविंद
शर्मेति नाम्नाविख्यातकीर्तिवान् ॥ १ ॥ श्रीपूर्वश्वेतरामोभूत्त
त्सुतः सर्वशास्त्रवित् हरेर्नाम्नांलक्षसंख्यांप्रत्यहंजापकःसुधी ॥
॥ २ ॥ श्रीमद्गिरिधरदासाख्यस्तत्सुतोखिलशास्त्रवित् ॥ वि
शिष्टाद्वैतसिद्धांततत्वपारप्रदर्शकः॥३॥गीतारामोभवत्तज्जोगुरोर्दे
वकिनंदनात् लौकिकंवैदिकंज्ञानंसंप्राप्तोज्येष्ठसोदरात् ॥ ४ ॥
कृत्वाकर्मविवेकेतिनामतश्चार्थतोपिच॥यथाशास्त्रमहंकुर्वेसीतारा
मपदार्पणं॥५॥रसवेदांकभूवर्षेशकेरुद्रधृतौतथा इषुमाससितेपूर्ण
दशम्यांशुक्रवासरे॥६॥इतिश्रीकर्मविवेकेपरीक्षाप्रकरणं॥इतिश्री
कुरुक्षेत्रांतर्गतकमलाग्रामवासिश्रीगिरधारीदासपुत्रगीतारामनि
र्मितेकर्मविवेकेउपपत्तिप्रकरणंसमाप्तं ॥ शुभमस्तु ॥ श्रीरामः ॥

## श्रीमहाभारत संस्कृतसटीक उत्तममोटा टाईपका अनुक्रमणिका सहित ॥

महर्षि श्रीवेदव्यास प्रणीत औ पंचमवेद संज्ञा होनेसे विशेष प्रशंसा करना निरर्थक है हां इतना अलबत्ते कह सक्तेहैं कि जो १२ महीने पहिले ६० रु० और ८० रु० को दुर्लभथा वही पुष्ट कागज और अक्षर नवीन उत्तम स्याही गणपतकृष्णाजीके छापेका हमने सबका सब १००० पुस्तक लेलिया है और ग्राहकगणोंके सुभीतेके लिये ४० रु० मूल्य डाकमहसूल ५॥ रु. रक्खा है बहुतपुस्तक बिकगई और बराबर बिकती चलीजाती है महाशय विद्वज्जन शीघ्रही ले लीजिये नहिंतो पूर्ववत् मूल्य हो जायगा.

## श्रीमद्भागवत ब्रजभाषाटीका उत्तम दृष्टांतों और माहात्म्य व भाषाटीका सहित ॥

श्री वेदव्यासप्रणीत अठारहों पुराणोंमें श्रीमद्भागवत सबसे कठिन है और इस्का प्रचार भारतखण्डमें सबसे अधिक है यह ग्रंथ क्लिष्टताके कारण सर्व साधारणको टीका होनेपरभी अच्छी रीतिसे समझना कठिनथा कोईस्थलमें बडे २ पण्डितोंकी भी बुद्धि चक्करमें उडजातीथी इसलिये विना संस्कृत पढे सर्व साधारण पंडित व स्वल्प विद्या जाननेवाले भगवद्भक्तोंके लाभार्थसंस्कृत मूल व अतिप्रिय ब्रजभाषाटीका और संबंधित कथाओंसे अधिक उत्तमोत्तम भक्ति ज्ञानमार्गी दृष्टांत देकर उत्तम टाईपके अक्षरोंमें विलायती बढिया कागज देकर हमने छपायाहै सबके सुगमार्थ मूल्य १५ पंद्रही रुपैया रक्खाहै.

इति

कर्मविवेक

अर्थात्

# धर्मराजका लेखा

समाप्त ।

